# અનુમોદના....

પૂજ્યપાદ પ્રવર્તિનીશ્રી રંજનશ્રીજી મહારાજના
સદુપદેશથી સંઘવી અંબાલાલ રતનચંદ
જૈન ધાર્મિક ટ્રસ્ટના જ્ઞાનખાતામાંથી
આ ગ્રંથનો સંપૂર્ણ લાભ લેવામાં આવેલ છે.
આની અમો ભાવભરી અનુમોદના
કરીએ છીએ.

શ્રી જિનશાસન આરાધના ટ્રસ્ટ

श्री हरिभद्रसूरिविरचिता

# । जंबूद्वीपसंग्रहणी ।

( श्रीप्रभानंदसूरिविरचितवृत्तिसहिता )

संपादका : संशोधकाश्च

सकलागमरहस्यवेदिआचार्यप्रवरश्रीमद्विज

**दानसूरीश्वराः**

प्रकाशक :

श्री जिनशासन आराधना ट्रस्ट

७-३ भोईवाडो भुलेश्वर, मुंबई-२.

अड्ढेत्यादि—अथवेति विकल्पांतरे भरतनाम्नि क्षेत्रे एकमेकसंख्याकं खंडं भवतीत्यादि शेषोऽध्याहार्यः, खंडप्रमा-
णत्वात्तस्य। यदुक्तं—"पंचसये छव्वीसे छच्चकलाविच्छडं भरहवासं" इति। तथा "दो हिमवंति त्ति" हेमवति वर्षधरे द्वे
द्विसंख्ये खंडे भवतः। यतो भरतक्षेत्रात् पराणि वर्षधरवर्षाणि क्रमेण द्विगुणद्विगुणविस्ताराणि। तदुक्तं "भरहेरवयप्पभिई,
दुगुणा दुगुणा य होइ विक्खंभो वासा वासहराणं, जावय वासं विदेहंति ॥ १ ॥ तथा "हेमवइ चउरो" इति हैमवते द्वितीये
क्षेत्रे चत्वारि चतुःसंख्याकानि खंडानि। 'अट्ठेत्यादि' महाहिमवति द्वितीये वर्षधरेऽष्टौ खंडानि। हरिवर्षे तृतीये क्षेत्रे षोडश
खंडानि। तथा 'बत्तीसमिति' निषधे तृतीयवर्षधरे पुनर्द्वात्रिंशत् खंडानि भवंति इति सर्वत्र संबध्यते। इति महाविदेहव्यतिरिक्तेषु
दक्षिणदिग्वर्त्तिषु वर्षवर्षधरेषु सर्वमीलने त्रिषष्टिखंडानि जातानि। इदानीमुत्तरदिग्व्यवस्थितक्षेत्रवर्षधरखंडानि निरूपयति—'मिलि-
येत्यादि' एवमेव मिलितानि समुदितानि त्रिषष्टिः खंडानि द्वितीयपार्श्वेऽपि भवेयुस्तद्यथा—एकं खंडमैरवते, द्वे शिखरिगिरौ,
चत्वारि हैरण्यवतक्षेत्रे, अष्टौ रुक्मिपर्वते, षोडश रम्यकक्षेत्रे, द्वात्रिंशत्तु नीलवति वर्षधर इति। 'चउसट्ठी' इत्यादि, इह
पदैकदेशेऽपि पदसमुदायोपचाराद्विदेहे इति महाविदेहे सर्ववर्षवर्षधरमध्यवर्त्तिनि क्षेत्रे चतुःषष्टिः खंडानि भवंति। एतावता
सर्वसंख्यया किं जातमित्याह—'तिरासीत्यादि' त्रयश्च ते राशयश्च त्रिराशयः तेषां पिंडः समूहः, यद्वा त्रयाणां राशीनां समाहार-
स्त्रिराशिः तस्य पिंडस्तस्मिन्, तुः पुनरर्थे नवत्यधिकं शतं खंडानि स्युरिति गाथाद्वयार्थः ॥ ४-५ ॥

अथ जम्बूद्वीपे योजनपरिमाणानि खंडानि कियंति भवंति? इत्यादिकं घनीकृतयोजनद्वारं गाथापंचकेनाह—

## —: પ્રાપ્તિ સ્થાન :—

(૧) પ્રકાશક :

(૨) શ્રી જિનશાસન આરાધના ટ્રસ્ટ
C/o. સુમતિલાલ ઉત્તમચંદ,
મારફતીયા મહેતાનો પાડો,
ગોળશેરી, પાટણ, ૩૮૪૨૬૫
( ઉત્તર ગુજરાત ).

(૩) મૂળીબેન અંબાલાલ રતનચંદ જૈન ધર્મશાળા
સ્ટેશન રોડ, સરદાર બાગ સામે,
વીરમગામ–૩૮૨૧૫૦

નકલ – ૫૦૦

મુલ્ય રૂા. ૧૦–૦૦

પુનઃ પ્રકાશન સંવત્–૨૦૪૨

Rs. 10–00

पढौकिताभिलषिताहारनेपथ्याभरणशयनीयावासादिलालितवपुर्भिर्युगलिकैर्विराजितं हैमवतनामकं द्वितीयं क्षेत्रमस्ति । तत्र ते युगलधर्मिणश्चतुःषष्टिपृष्ठकरंडभ्राजितमेकगव्यूतोच्चं चतुर्थभक्तांते कृतमनोऽभिलषिताहारं रोगजरापमृत्युदुःखदौर्मनस्यादिरहितमेकपल्योपमायुर्देहं दधानाः, पर्यंते एकोनाशीतिदिनान्यपत्यानि पालयित्वा स्वस्य समस्थितिष्वल्पस्थितिषु वा देवेषूत्पद्यंते । अत्र च केचिदेतेषां चणकबदरामलकप्रमितमाहारमेकद्वित्रिगव्यूतप्रमाणशरीराणां क्रमेण, अपरे चाष्टादशव्यंजनाकुलां रसवतीं भोजनतयाभिदधति । तत्र सकर्णानां कर्णमवतंसयति, यतः शर्कराजित्वररसां पृथ्वी कल्पवृक्षाणां फलानि च तेषामाहारतयोपयुज्यंते । आह चागमः—" पुढवी पुप्फफलाहारा तेणं मणुआ पन्नत्ता " । तत्र च सिंहव्याघ्रसर्पविडालादयो दुष्टतिर्यंचोऽपि क्षेत्रस्वाभाव्यान्मिथो हिंस्यहिंसकभाववर्जिताः प्रतनुकषायतयावतिष्ठंते । अतस्तद्भावभावितत्वादपि देवगतिमेवाश्नुवते । दंशमशकयूकामत्कुणप्रमुखाः शरीरसंतापकारिणः क्षुद्रजंतवस्तु मूलतोऽपि न भवंति । कालस्तत्र सुषमदुषमारूप एक एव । तन्मध्ये पंचवर्णरत्नमयः सर्वतः सहस्रयोजनप्रमाणः पल्याकारः शब्दापाती वृत्तवैताढ्यपर्वतः, येऽमुं रजतमयमभिदधति, तेषां जंबूद्वीपप्रज्ञप्त्या सह विरोधः । तत्र ह्येवमुक्तं—" कहिणं भंते हेमवए वासे सद्दावईनामं वट्टवेयड्ढपव्वए पन्नत्ते ? गोयमा रोहियाए महानईए पच्चच्छिमेणं रोहिअंसाए महानईए, पुरच्छिमेणं हेमवयवासस्स बहुमज्झदेसभागे इत्थणं सद्दावईनामं वट्टवेयड्ढे पव्वए पन्नत्ते, एगं जोयणसहस्सं उड्ढं उच्चत्तेणं, अड्ढाइयाइं जोयणसयाइं उव्वेहेणं, सव्वत्थसमे, पल्लगसंठाणसंठिए, एगं जोयणसहस्सं आयामविक्खंभेणं तिन्नि जोयणसहस्साइं

१ ' हीनेषु ' इत्यपि क्वचित् ।

નમો તિત્થસ્સ

# નિવેદન

ચૌદસો ચુમ્માલીસ ગ્રંથના રચયિતા સુરિપુરંદરજી શ્રી હરિભદ્રસૂરિ મહારાજ રચિત "જંબૂદ્વીપ સંગ્રહણી" અને તેની પ્રભાનંદસૂરિ રચિત વૃતિ સહિત પુનઃ પ્રકાશન કરતાં અમે અત્યંત આનંદ અનુભવીએ છીએ. પ્રસ્તુત વૃત્તિની રચના સંવત ૧૩૯૦ માં થએલ છે. વર્તમાનમાં ચતુર્વિધ સંઘમાં ચાર પ્રકરણનો જે અભ્યાસ કરાય છે તેમાં આ ચોથું પ્રકરણ છે. આના ઉપર ગુજરાતી ભાષામાં પણ અનેક વિવેચનો લખાઇ ગયા છે. પ્રસ્તુત વૃત્તિ સરળ ભાષામાં હોઈ અલ્પ ક્ષયોપશમવાળાને પણ બોધ થવામાં સારી રીતે નિમિત્તભૂત બને છે.

પ્રસ્તુત વૃત્તિના સંશોધક-સંપાદક સકલાગમ રહસ્યવેદી, પરમગીતાર્થ, સંઘકૌશલ્યાધાર, સ્વ. આચાર્યદેવ શ્રીમદ્ વિજય **દાનસૂરીશ્વરજી** મહારાજા છે. પ્રસ્તુત ગ્રંથના સંશોધન-પ્રકાશન વખતે પૂજ્યશ્રી પંન્યાસ પદથી અલંકૃત હતા. "શ્રી જૈન ધર્મ પ્રચારક સભા" ભાવનગર તરફથી આ ગ્રંથનું પ્રથમ પ્રકાશન સંવત ૧૯૯૧માં થયું હતું. ૭૧ વર્ષ પૂર્વે છપાયેલ આ ગ્રંથ જીર્ણ થવાથી તથા અલભ્ય બનવાથી, તેમજ અભ્યાસમાં અતિ ઉપયોગી હોવાથી અમે તેને પુનઃ પ્રકાશિત કરીએ છીએ.

આ પ્રસંગે શ્રી ધર્મ પ્રચારક સભાને પણ અમે કૃતજ્ઞભાવે યાદ કરીએ છીએ.

—આ પૂર્વે અમારા તરફથી (૧) જીવ વિચાર સટીક, (૨) ન્યાય સંગ્રહ, (૩) ધર્મ સંગ્રહ સટીક ભાગ ૧-(૪) ભાગ-૩, (૫) જીવસમાસ ટીકાનુવાદ વિ. ગ્રંથો પ્રકાશિત થયેલ છે. હાલમાં સ્યાદવાદમંજરી અનુવાદ તથા ધર્મસંગ્રહ ભાગ ૨ જો તથા અભિધાન વ્યુત્પત્તિ ક્રિયા કોશ છપાઇ રહ્યા છે. આપણા પ્રાચ્ય સાહિત્યની મહાન સમૃદ્ધિની રક્ષા માટે પ્રચંડ પુરૂષાર્થ આવશ્યકતા છે. હાલમાં લગભગ છસો જેટલા પ્રાચીન ગ્રંથોને અમે હેન્ડ મેઇડ કાગળમાં લહિયાઓ પાસે લખાવેલ છે. ત્રીસ લહિયાઓ હાલ શાસ્ત્ર લેખનનું કાર્ય કરી રહ્યા છે.

પ્રસ્તુત ગ્રંથ અનેક પુન્યાત્માઓને સ્વાધ્યાયમાં ઉપયોગી બને એ જ એક માત્ર શુભાભિલાષા...

– શ્રી જિનશાસન આરાધના ટ્રસ્ટ

जिनजन्मनि मेघवर्षा विदधति । तत्रैशानकोणे सहस्रयोजनोच्छ्रायविस्तारमुपरिष्टादर्द्धायामं बलकूटं स्वनामदैवतं, तच्च पंचयोजनशतानि नंदनवनाद्बहिर्निःसृतं । उक्तं च—“ नंदणवणरुंभेत्ता, पंचसए जोयणाइं नीसरिउं । आयामे पंचसए, रुंभेत्ता ठाइ बलकूडे ” ॥ १ ॥ ततो द्विषष्टिसहस्राणि पंचशताधिकानि योजनानामुपरिष्टादारुह्य सौमनसं वनं नंदनवनसदृशं, केवलं कूटानि तत्र न संति । वाप्यो यथा—सुमनाः-सौमनसा-सौमनांता-मनोरमा, उत्तरकुरु-देवकुरु-वीरसेना-सरस्वती, विशाला-माघभद्रा-अभयसेना-रोहिणी, भद्रोत्तरा-भद्रा-सुभद्रा-भद्रवती । शेषं तथैव । ततः षट्त्रिंशत्सहस्राणि योजनानामुपरि गत्वा सौमनसविशिष्टं पंडकवनं, तद्विस्तारः सहस्रं योजनानि, बहुमध्यदेशभागे चूला चास्य, सा उपर्यधो द्वादशचतुर्योजनायामा चत्वारिंशद्योजनोच्चा वैडूर्यमयी, तस्या उपरि सिद्धायतनं विजयार्द्धसदृशं मध्येवनं, विदिक्षु षोडश पुष्करिण्यः, तद्यथा—पुंड्रा-पुंड्रप्रभा-सुरक्ता-रक्तवती, क्षीररसा-इक्षुरसा-अमृतरसा-वारुणी, शंखोत्तरा-शंखा-शंखावर्त्ता-बलाहका, पुष्पोत्तरा-पुष्पवती-सुपुष्पा-पुष्पमालिनी । प्रासादाः सिद्धायतनानि च प्राग्वत् । वनांते चतसृषु दिक्षु एकैका जिनाभिषेकशिला, तद्यथा—प्राच्यां पांडुशिला, दक्षिणस्यामतिपांडुशिला, अपाच्यां रक्तशिला, उत्तरायामतिरक्तशिला इति । ताश्च सर्वार्द्धचंद्रसंस्थानसंस्थिताः पंचयोजनशतायामास्तदर्द्धविस्ताराश्चतुर्योजनोत्सेधाः अर्जुनकनकनिर्माणाः, तासु पांडुकंबलारक्तकंबलयोरुपरि द्वे सिंहासने, शेषयोस्त्वेकैकं, सिंहासनानां च सर्वेषामायामो विष्कंभश्च पंचधनुःशतानि, तदर्द्धं पृथुत्वं प्राच्यापाच्येषु विजयोद्भवा जिना अभिषिच्यंते । इतरयोस्तु भरतैरवतोत्पन्नाः तीर्थंकरा इति ।

वरदामतीर्थं तु तयोर्बहुमध्यदेशभागे इति । इह भद्रशालमुखवनयोर्मध्ये चत्वारो वक्षस्कारास्तदंतरे तिस्रो नद्यः, तासामंतरालेऽष्टौ विजयाः, सर्वेऽपि चतुर्भिर्गुणिता जातान्यष्टौ वनानि, षोडश वक्षस्काराः, द्वादशांतर्नद्यः, द्वात्रिंशद्विजयाः । प्रतिविजयं च द्वे द्वे महानद्यौ, निषधसविधवर्त्तिकुंडाद्विनिर्गते गंगासिंधुनाम्न्यौ, केवलमौदीच्येषु षोडशसु विजयेषु माल्य(नील)वदुपकंठस्थितकुंडात् निःसृते नामतो रक्तारक्तवत्यौ सरितौ विद्येते । तत्र वक्षस्काराणां नामानि यथा–चित्र–पद्म–नलिन–एकशैलाः, त्रिकूट–वैश्रमण–सुदर्शन–अंजनाः, अंकवत्–पद्मवत्–आशीविष–सुखावहाः, चंद्र–सूर्य–नाग–देवगिरयः इति । प्रतिवक्षस्कारं चत्वारि चत्वारि कूटानि सिद्धायतन–स्वनाम–पूर्वविजय–अपरविजयाख्यानि । तथांतर्नद्यः कुंडनिर्गमाः कुंडमध्यद्वीपाः स्वनामदेवीवसतयः शीताशीतोदानुगामिन्यः प्रत्येकं पंचविंशत्यधिकशतयोजनविस्तारा दशगव्यूतावगाहाः, ताश्च द्वादश नामतो यथा–ग्राहवती–ह्रदवती–वेगवती तप्तजला–मत्तजला–उन्मत्तजलाः, क्षीरोदा–सिंहस्रोता–ऽतर्वाहिन्यः, ऊर्मिमालिनी–गंभीरमालिनी–फेनमालिन्य इति । विजया यथा–कच्छ–सुकच्छ–महाकच्छ–कच्छवत्–आवर्त्त–मंगलावर्त्त–पुष्कर–पुष्करवंतः, वच्छ–सुवच्छ–महावच्छ–वच्छवत्–रम्य–रम्यक–रमणीय–मंगलवंतः, पद्म–सुपद्म–महापद्म–पद्मवत्–शंख–कुमुद–नलिन–सलिलवंतः वप्र–सुवप्र–महावप्र–वप्रवत्–वल्गु–सुवल्गु–गंधिल–गंधिलवंतः, गिरिभिर्नदीभिश्च विभक्ताः । प्रतिविजयं चैकैका नगरी, तद्यथा–क्षेमा–क्षेमपुरी–अरिष्टा–अरिष्टवती–खड्गी–मंजूषा–औषधी–पुंडरीकिण्यः, सुसीमा–कुंडला–अपराजिता–प्रभाकरी–अंकवती–पद्मावती–शुभा–रत्नसंचयाः, अश्वपुरी–सिंहपुरी–महापुरी–विजयपुरी–राज्या–विराज्या–अशोका–वीतशोकाः, विजया–वैजयंती–जयंती–अपराजिता–चक्रपुरी–खड्गपुरी–अवध्या–

। श्रीहरिभद्रसूरिविरचिता ।

# । जम्बूद्वीपसङ्ग्रहणी ।

। श्रीप्रभानन्दसूरिविरचितया टीकया समलङ्कृता ।

न्यायाम्भोनिधि श्रीमद्विजयानन्दसूरीश्वर पादचरणांभोजचंचरिकेण.

भाम्बपुर वास्तव्य शा. आणंदजी पुरुषोत्तमस्य द्रव्यसाहाय्येन

प्रकाशयित्री.

श्रीजैनधर्म प्रसारक सभा—भावनगर.

संवत् १९७१—वीर संवत् २४४१—इस्वीसन १९१५.

मंत्रणे आनन्दमुद्रणालये लल्लुभायात्मज-गुलाबचन्द्र-द्वारा मुद्रयित्वा प्रकाशितम् ।

# । प्रस्तावना ।

विदांकुर्वन्तु सज्जनाः सहृदयाः उपयुक्ततरोऽयं ग्रन्थो जंबूद्वीपसंग्रहण्यभिध एकोनत्रिंशद्गाथात्मको भूगोलजिज्ञासूनां श्रीहरिभद्रसूरिपादैः प्रतिपादितः। पूज्याश्चेमे चतुश्चत्वारिंशदधिकचतुर्दशशतग्रन्थप्रणेतारो अन्ये वेति न सम्यग्ज्ञायते तज्ज्ञापकोल्लेखाभावादस्मिन्। टीका चास्य निष्टङ्किता सविस्तरा सरलभाषया श्रीप्रभानन्दसूरिभिर्नवत्युत्तरत्रयोदशशततमे विक्रमाब्दे। सङ्ग्रहण्यामस्यां संगृहीताः सङ्ग्रहकारैर्जम्बूद्वीपस्यैवामुकामुकपदार्थाः सस्वरूपसङ्ख्याप्रमाणादयः। तत्र च वृत्ताकारस्थितासङ्ख्यद्वीपसमुद्राणां मध्यवर्तिनोऽस्यानेकशाश्वतवस्तुनिचितस्य जम्बूद्वीपस्य द्वारदशकेन कृता प्ररूपणा। गणितानुयोगरत्नलिप्सवोऽभिमुखीक्रियन्तेऽध्ययनेनाध्यापनेनास्य, इदमेवास्य मुद्रापणप्राथम्ये कारणं पश्यन्तो वयं प्रकटितवन्तः। प्रकटितं चेदं प्रकरणं पन्न्यासपदालङ्कृतानां श्रीमद्दानविजयपादानां प्रकटाकपटहृत्कपाटप्रकटितहितोपदेशामृतघटनिर्गतरसचुलुकाचान्तचेतस्केन संसदध्यक्षेण आणंदजीतनुजन्मना कुंवरजीनाम्ना श्रेष्ठिना स्वपितृश्रेयसे। मुद्रापणप्रतिकृति (प्रेसकॉपी) विशुद्धावपि कृतकृपाणामुक्तपन्न्यासवर्याणां महोपकारस्वीकारे सहर्षेयं संसद्। द्रव्यानुयोगगणितानुयोगवैषयिकैतत्समानानां लघुबृहद्ग्रन्थानां सटीकाटीकानां मुद्रापणं भव्यजीवोपकारार्थमुपयुक्ततरं मन्यामहे, अस्यां च दिशि प्रयतमानानन्यानपि दिदृक्षवो वयमन्यसंस्थाधिकारिणो द्रव्यसद्व्ययकारिणश्च प्रेरयामहे। लघुग्रन्थोऽयं द्रव्यसहायकारिणा प्राभृतीकरिष्यते ज्ञानागारेषु ज्ञानागारानगारिगणेषु पिपठिषुषु च। कृतेऽपि यथाशक्ति प्रयत्नेऽत्र मुद्रणदोषाद्दृष्टिदोषाच्चाऽस्थिकसुलभस्खलिताद्वा या काचिदशुद्धिर्बुद्धिमतां धीपथमवतरेत्तस्याः क्षमापनपूर्वं ज्ञापनप्रार्थनां करोति संसद्येनावृत्तौ द्वितीयायां लब्धलक्ष्या स्यात्। इति शम्॥

श्री जैनधर्म प्रसारक सभा—भावनगर.

श्रीहरिभद्रसूरिविरचिता

# जंबूद्वीपसंग्रहणी.

(श्रीप्रभानंदसूरिविरचितवृत्तिसहिता.)

नत्वा श्रीवीरजिनं संदर्शितविश्वविश्ववस्तुचयम् ।
श्रीक्षेत्रसंग्रहण्या वृत्तिं कुर्वे यथाशक्ति ॥ १ ॥

दत्तैकांतवादिसंदोहापारसादानां गिरास्वर्गापगानादानुवादानां श्रीहरिभद्रसूरिपादानां कृतेर्व्याचिख्यासायां मादृशस्याल्पमेधसः कोऽवकाशः? तथाप्यर्थनिपुणप्रकरणरागात् स्वशक्तिमजानानोऽप्युपचक्रमे । इह तावत् सूत्रकारः प्रथमं चतुरतिशयस्वरूपजगवन्नमस्कारमंगलाभिधायिकां शिष्टोपदिष्टमार्गानुसरणार्थमाद्यगाथामाह ।

१ उपक्रमे २ मंगलाद्यभिधायिकाम्

नमिय जिणं सव्वन्नुं, जगेंपुज्जं जगेंगुरुं महावीरं ।
जंबूद्दीव पयत्थे, वुच्छं सुत्ता सपरहेउं ॥ १ ॥

नमियजिणेत्यादि—महावीरं नत्वा जंबूद्वीपपदार्थान् वक्ष्ये इति संबंधः। तत्र कर्मविदारणादिगुणाद्वीरः। उक्तं च—"विदारयति यत्कर्म तपसा च विराजते। तपोवीर्येण युक्तश्च तस्माद्वीर इति स्मृतः" ॥ १ ॥ ततो महांश्चासौ वीरश्च महावीरः चरमतीर्थंकरः तं नत्वा प्रणम्य, किंविशिष्टमित्याह, रागादीनष्टादशांतरंगारीन् जयत्यजैजवति इति जिनः तं तथोक्तं, इत्यनेनापायापगमातिशयः अपायरूपांतरारिक्षयात्। तथा सर्वज्ञं सर्वं जीवाजीवगतिस्थित्यादिकं जानाति वेत्तीति सर्वज्ञः तं तथाविधं, इह ज्ञानग्रहणेन दर्शनमपि गृहीतं तेन सर्वदर्शिनमित्यपि प्रत्येतव्यं, तन्नांतरीयकत्वात्, एतेन तु ज्ञानातिशयः सूचितः। तथा जगत्पूज्यं अत्र जगच्छब्देन निग्रंथिकजन्यसंज्ञिपर्याप्तपंचेंद्रियग्रहः ततो जगतः पूज्योऽर्चनीयो जगत्पूज्यः तं तथाप्रकारं, अनेन तु विशेषणेन पूजातिशयः। पुनः कीदृशं? जगद्गुरुं इह जगच्छब्देन चतुर्दशरज्ज्वात्मकलोकपरिग्रहः, ततो जगच्चराचरं गृणाति कथयति जगद्गुरुः तं, अनेकद्वीपसागरसुरालयनैरयिकालयादिपूर्णजगदाकारमित्यर्थः, मूककेवलिनो हि सर्वज्ञाः सर्वदर्शिनोऽपि वचनसामर्थ्याभावान्न विश्वस्वरूपं निरूपयितुमलंभूष्णवो भवंत्यनेन तद्व्यवच्छेदाद्वचनातिशयः प्रत्यपादि। एवं गाथार्द्धेन भगवन्नमस्काररूपं मंगलमुक्तं। अपरार्द्धे तु अभिधेयादीनाह,—"जंबूद्दीवपयत्थि त्ति" जंबूद्वे-

३ नमिऊण ४ जयपुज्जं ५ जयगुरुं ॥

विशेषस्तेन उपलक्षितो द्वीपो जंबूद्वीपः, उत्तरकुरुक्षेत्रे - हि नीलवद्वर्षधरमाल्यवद्वक्षस्कारशीतानदीनां बहुमध्यदेशभागे बहुतद्भद्र- लक्षलक्षितो जंबूवृक्षोऽस्ति, तन्नाम्नायं जंबूद्वीपः । उक्तं च भगवत्यंगे—"से केणट्ठेणं भंते! एवं वुच्चइ, जंबूद्दीवे दीवे, गोयमा! जंबूद्दीवेणं दीवे मंदरस्स पव्वयस्स उत्तरेणं लवणस्स दाहिणेणं जाव तत्थ बहवे जंबूरुक्खा जंबूवना जाव उवसोहेमाणा चिट्ठंति से तेणट्ठेणं गोयमा! एवं वुच्चइ जंबूद्दीवे दीवे इति" तत्र पदार्थाः क्षेत्रपर्वतनदीवनादयोऽभिधेयवस्तुरूपाः तान्, किं करिष्यामि? इत्याह, 'वुच्छं' वक्ष्याम्यभिधास्यामि, इहाऽस्मदर्थक्रियायोगात्सूत्रेऽनुक्तोऽप्यहमित्यात्मनिर्देशो ज्ञातव्यः, जंबूद्वीपपदार्थान् वक्ष्यामि, अनेन त्वभिधेयं निगदितं । न भगवतोऽतिशायिज्ञानमंतरेण चक्षुरगोचरैतावत्क्षेत्रस्वरूपप्ररूपणप्रवीणतास्तीत्यादिपर- प्रश्ननिराकरणायाह,–'सुत्त त्ति' सूत्रं सिध्धांतो गणधरादिरचितजंबूद्वीपप्रज्ञप्तिक्षेत्रसमासादि तस्मात्, न स्वमत्यनुसारेण । किम- र्थमेतावान् प्रयासः क्रियते, ? इत्याह 'सपरहेउ त्ति' स्व आत्मा परोऽन्यस्तयोर्हेतुर्निमित्तं तदर्थमित्यर्थः, एतेन संबंधोऽभिहितः, स च स्वपरभेदाद् द्विधा, पुनरेकैकोऽनंतरपरंपरभेदाद् द्विधा, तत्रानंतरः कर्तुर्भव्यसत्वानुग्रहः परस्य श्रोतुस्त्वेतदर्थावगमो जंबूद्वीप- विचारज्ञानरूपः, परंपरस्तु द्वयोरपि परमपदावाप्तिरिति । अभिधानं तूत्तरत्र गाथायां स्वयमेव सूत्रकारो भणिष्यति ॥ १ ॥

इदानीमभिधेयरूपद्वारपुरस्सरं कविः प्रकरणाभिधानमाह—

खंडा जोयण वासा, पव्वय कूडा य तित्थ सेढीओ ।
विजय दह सलिलाओ, पिंडेसिं होइ संघयणी ॥ २ ॥

तत्र खंडानि विस्तारेण भरतप्रमाणानि, योजनानि घनीकृतरूपाणि, वर्षाणि भरतक्षेत्रादीनि, पर्वता वैताढ्यादयः कू-
टानि वैताढ्यादिपर्वतशिरःस्थितानि शृंगरूपाणि सिद्धायतनकूटादीनि, तीर्थानि मागधादीनि, श्रेणयो दीर्घवैताढ्येषु पार्श्वस्थे-
ऽपि विद्याधरनगराभियोगिकदेवनिवासश्रेणयः, विजयाः कच्छादयः, ह्रदाः पद्मादयो महाह्रदाः, सलिला गंगाद्या महानद्यः । ऽत्र स-
मास एवं कर्त्तव्यो योजनानि च वर्षाणि च योजनवर्षाणि प्राकृतत्वाल्लिंगव्यत्ययः, एवमग्रेऽपि, नवरं तीर्थानि च श्रेणयश्च तास्तीर्थ-
श्रेणयः, " स्त्रीपुंनपुंसकानां सहवचने स्यात्परं लिंगमिति वचनात् " क्लीबत्वमेवमग्रेऽपि विज्ञेयं । " पिंडेसिं होइ संघयणि त्ति " ।
एषां दशानां वर्णनीयपदार्थानां पिंडः समवायः संग्रहणिर्भवति, पिंडशब्दः समूहेऽप्यस्ति, यदाह हैमानेकार्थः—" पिंडो वृंदे जपा-
पुष्पे गोले बोलेऽगसिल्हयोरिति " । एतानि खंडादीनि दशापि परमार्थतः क्षेत्रमेव, ततः एवं निरुक्तिः, क्षेत्रं जंबूद्वीपलक्षणं सं-
गृह्यते उपादीयतेऽनयेति क्षेत्रसंग्रहणिः अवयवे समुदायोपचारात् । इमानि दश द्वाराण्यत्र प्रकरणेऽभिधास्यंत इति ॥ २ ॥

अथ यथोद्देशस्तथा निर्देश इति न्यायमाश्रित्य प्रथमं गाथात्रयेण खंडान्याह—

**नउयसयं खंडाणं, भरहपमाणेण भाइए लक्खे ।**
**अहवा नउयसयगुणं, भरहपमाणं हवइ लक्खं ॥ ३ ॥**

नउयसयेत्ति—समस्तमपि जंबूद्वीपं नवत्युत्तरं शतं खंडानां भणिष्यमाणप्रकारेण भवतीति शेषः । क्षेत्रपर्वतविस्तारमा-

श्रित्य खंमानि ज्ञातव्यानि न पुनर्दैर्घत्वेन, यतः—धनुष्पृष्ठाकारत्वादाद्यं जरतक्षेत्रं लघीयस्ततः पराणि क्रमेण दीर्घतराणि यावन्महाविदेहो मध्यविज्ञागे योजनलक्षदैर्घ्यः। कियत्प्रमाणानि खंमानि जवंति ? इत्याह—" जरहपमाणेण " इत्यादि जरतं प्रथमं वर्षं तस्य प्रमाणं मानं षम्विंशत्यधिकपंचयोजनशतानि सयोजनैकोनविंशषम्जागानि तेन जाजिते जागे हृते सति यल्लज्यते तत्समानि खंमानि जवंति। तद्यथा—जंबूद्वीपविष्कंजो योजनलक्षं, एक एककस्तदग्रे पंच शून्यानि ध्रियंते १००००० एष जाज्यराशिः, जरतमानं तु प्राक् कथितं ५२६ योजन, कला ६, अयं च जागहारः, ततो लब्धं नवत्युत्तरं शतं, १९०, एतानि सर्वजंबूद्वीपखंमानि पुनर्विधानांतरेण खंमानयनार्थोपायमाह—' अहवे ' त्यादि, अथवा प्रकारांतरेण जरतप्रमाणमुक्तस्वरूपं नवत्यधिकेन शतेन गुणितं जंबूद्वीपविष्कंजमानं लक्षयोजनरूपं जवति। तथाहि—जरतमानं ५२६ यो. कला ६, एष मूलराशिः, नवत्युत्तरं शतं च १९०, गुणकारः ततो गुणिते लब्धं योजनानि लक्षं १००००० एतत्पुनर्जंबूद्वीपमानमिति ॥ ३ ॥

पुनर्मुग्धावबोधनार्थं वर्षाणि वर्षधरांश्चाश्रित्य तृतीयं प्रकारमाह—

अहवेग खंम जरहे, दो हिमवंते य हेमवइ चउरो।
अट्ठ महा हिमवंते, सोलस खंमाइं हरिवासे ॥ ४ ॥
बत्तीसं पुण निसढे, मिलिया तेसट्ठि बीयपासेवि।
चउसट्ठी उ विदेहे, तिरासिपिंमे उ नउयसयं ॥ ५ ॥

जोयणपरिमाणाइं, समचतुरंसाइं इत्थ खंडाइं ।
लक्खस्स य परिहीए, तप्पाय गुणे य (ते) हुंतेव ॥ ६ ॥

जोयणेत्ति--खंडप्रमाणमजानानं शिष्यं प्रति गुरुस्तत्प्रमाणमाचष्टे--अत्रास्मिन् जम्बूद्वीपे प्रक्रांतप्रकरणे वा घनीकृत-योजनपरिमाणानि समचतुरस्राणां खंडानि योजनानि भण्यंते । समास्तुल्यप्रमाणाश्चत्वारोऽस्राः कोटयो येषां तानि तथोक्तानि । तथाहि, कल्पनया किल कश्चिद् देवः सकलमपि जंबूद्वीपं योजनप्रमाणेष्टिकाचितं करोति, प्रतरविस्तारेण तत्प्रमाणा यावत्य इष्टिका भवंति तावंत्येव योजनखंडानि भवेयुः । तदानयनाय करणमाह--' लक्खस्से ' इत्यादि, लक्षस्येति योजनलक्षप्रमाणं वृत्तक्षेत्रं तस्य परिधिर्बाह्यपरिमंडलं भणिष्यमाणप्रमाणं तस्य ' तप्पायगुणे ' त्ति, तस्य लक्षस्य यः पादश्चतुर्थोऽशः पंचविंशति-सहस्ररूपः तेन गुणो गुणकारः तस्मिन् कृते सति, चः समुच्चये, किं भवतीत्याह,--' तेहुंति त्ति ' प्राकृतत्वात् लिंगव्यत्ययः । ततस्तानि योजनपरिमाणानि खंडानि भवंति संपद्यंते । तथा हि लक्षस्य परिधौ पंचविंशत्या सहस्रैर्गुणिते वांछितांको लभ्यत इति भावः, स चोत्तरत्र प्रपंचेन भणिष्यति ॥ ६ ॥

अधुना यदुक्तं ' लक्खस्सय परिहीए ' इति परिधेर्नामकीर्तनं तस्यानयनाय करणगाथामाह--

विक्खंभवग्गदहगुण, करणि वट्टस्स परिरओ होइ ।
विक्खंभपायगुणिओ, परिरओ तस्स गणियपयं ॥ ७ ॥

विक्खंभेति—इह जंबूद्वीपपरिधिना प्रयोजनं, स च वेदिकाशिरःकटकजालकबाह्यदिग्भागवर्त्ती ग्राह्यः, अतो मूले द्वा-दशयोजनानि पृथुला वेदिका तस्याश्च मध्यान्यष्टौ योजनानि जंबूद्वीपे ज्ञातव्यानि, योजनचतुष्टयमानो बाह्यप्रदेशो लवणसमुद्रमध्ये गण्यते ' विष्कंभे ' त्यादि विष्कंभो विस्तारः तस्य वर्गः तावतैव गुणनं, यथा चत्वारश्चतुर्भिर्गुणिताः षोडश भवंतीत्यादि स च दशगुणो दशकेन गुणितः तस्य करणिर्विषमसमेत्यादिना वर्गमूलानयनं, एवं कृते किं भवति ? इत्याह—' वट्टस्सेत्यादि ' वृत्तस्य वर्त्तुलक्षेत्रस्य परिरयः परिधिर्भवति स्यात् । विष्कंभस्य पादेन चतुर्थांशेन गुणितः सन् परिरयो गणितपदं भवति । किंच सर्ववृत्त-क्षेत्राणां परिधिगणितपदयोरानयनायायमेव करणविधिरिति गाथाक्षरार्थः । भावार्थस्त्वयं यथा जंबूद्वीपस्य विष्कंभो योजनलक्षमानः तत एको न्यस्यते तदग्रे पंच शून्यानि १००००० तस्य वर्गो विधीयते एककस्याग्रे दशशून्यानि १०००००००००० पुनर्दशगुणने एकशून्यवृद्धिः १००००००००००० एतस्य राशेर्मूलमेतदार्याद्वयानुसारेणानेतव्यं, यथा—विषमात्पदतस्त्यक्त्वा वर्गस्थानच्युतेन मूलेन । द्विगुणेन भजेच्छेषं लब्धं विनिवेशयेत् पंक्त्यां ॥ १ ॥ तद्वर्गं संशोध्य, द्विगुणीकुर्वीत पूर्ववल्लब्धं । उत्सार्य ततो विभजेत्, शेषं द्विगुणं कृतं दलयेत् ॥ २ ॥ ततो लब्धांकस्य छेदराशिः, षट् लक्षाणि, द्वात्रिंशत्सहस्राणि, चत्वारि शतानि, सप्तचत्वारिंशदधिकानि, ६३२४४७ एतानि च प्रांतवर्त्तिसप्तकं मुक्त्वा सर्वाण्यर्धीक्रियंते ततो जातानि त्रीणि लक्षाणि षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके ३१६२२७, शेषमुपरीदमुद्धरति चत्वारि लक्षाणि, चतुरशीतिसहस्राणि, चत्वारि शतानि, एकसप्तत्यग्राणि ४८४४७१, अमूनि च योजनानि गव्यूतं योजनस्य चतुर्थांशः, ततश्चतुर्भिर्गुणितानि जाता एकोनविंशतिर्लक्षाः, सप्तत्रिंशत्सहस्रा,

अष्टौ शतानि, चतुरशीति युतानि, गव्यूतानां १९३७८८४, ततश्छेदराशिना षड्लक्षादिना नवरमंत्यसप्तकमपि द्विगुणं कृत्वा भागे हृते लब्धं गव्यूतत्रितयं शेषमिदमुपरिष्टात्तिष्ठति, चत्वारिंशत्सहस्राणि, पंचशतानि, द्वाविंशत्यधिकानि ४०५२२, एकेन गव्यूतेन धनुःसहस्रद्वयं भवति, तावता च गव्यूतरूप उध्दरितराशिर्गुण्यते, तद्यथा अग्रे शून्यत्रयं दत्वा मूलराशिर्द्विगुणो विधीयते, जाता अष्टौ कोटयो दशलक्षाश्चतुश्चत्वारिंशत् सहस्राः ८१०४४०००, पूर्वोक्तच्छेदराशिना भागो ह्रियते लब्धमष्टाविंशत्यधिकं धनुःशतं १२८, शेषमिदमुपरिधनूरूपं तिष्ठति। एकोननवतिः सहस्राण्यष्टाशीत्यधिकान्यष्टौ शतानि ८९८८८, ततोऽङ्गुलानयनाय षण्णवत्या एतस्य गुणकारे दत्ते जातानि षडशीतिलक्षाण्येकोनत्रिंशत्सहस्राणि द्वे शतेऽष्टचत्वारिंशदधिके ८६२९२४८ प्राक्तनरीत्या छेदराशिमधो विहाय भागे हृते लब्धानि त्रयोदशांगुलानि १३, उपरीदमवशिष्यते, चत्वारि लक्षाणि, सप्त सहस्राणि, षट्चत्वारिंशदधिकानि, त्रीणि शतानि ४०७३४६, अर्ध्दांगुलानयनाय एष राशिर्द्विगुणीक्रियते, जातान्यष्टौ लक्षाणि, चतुर्दश सहस्राणि, षट्शतानि, द्विनवत्यर्गलानि ८१४६९२, प्राक्तनेन च्छेदराशिना भक्ते लब्धमर्ध्दमंगुलं शेषमुध्दरति, एका लक्षा, द्व्यशीतिः सहस्राणि, द्वे शते अष्टात्रिंशदधिके १८२२३८, एष जंबूद्वीपस्य परिधिरिति ॥ ७ ॥

अमुमेवार्थं स्पष्टतरमाह—

परिही तिलक्ख सोलस, सहस्स दोयसय सत्तवीसहिया।
कोसतिगट्ठावीसं, धणुसय तेरंगुलध्दहिअं ॥ ८ ॥

परिही त्ति—योजनानां तिस्रो लक्षाः, षोडश सहस्राः, द्वे शते सप्तविंशत्यधिके, क्रोशत्रयमष्टाविंशं धनुःशतं त्रयोदशांगुलान्यर्द्धं चांगुलं साधिकं जंबूद्वीपस्य परिधिः परिक्षेपो भवति । इहाधिकग्रहणादेका यूका लिक्षा चैका लभ्यत इत्यादि विशेषार्थिना स्वयमेवाभ्यूह्यं, सूत्रकारेणोपेक्षितत्वान्मयापि न लिखितमिति ॥ ८ ॥

अधुना जंबूद्वीपस्य गणितपदे कृते यत्संपद्यते तदभिधित्सुराह—

सत्तेवय कोडिसया, नउआ छप्पन्न सयसहस्साइं ।
चउणउयं च सहस्सा, सयं दिवड्ढं च साहीयं ॥ ९ ॥
गाउयमेगं पनरस, धणूसया तह धणूणि पन्नरस ।
सट्ठिं च अंगुलाइं, जंबूदीवस्स गणियपयं ॥ १० ॥

सत्तेवय त्ति—एवोऽवधारणे सप्त कोटिशतानि नवतिकोटयः षट्पंचाशल्लक्षाणि चतुर्नवतिसहस्राणि, द्वितीयार्द्धं शतं च द्वितीयं शतं अर्द्धं यत्र तत् द्वितीयार्द्धं सार्द्धं शतमित्यर्थः । चः समुच्चये । कीदृशमित्याह–साधिकमधिकेन सहितं, आधिक्यमेवाविष्करोति, ' गाउय त्ति ' एकमेकसंख्याकं गव्यूतं क्रोशं, पंचदशधनुःशतानि पंचदशोत्तराणीत्यर्थः । चः समुच्चयार्थः स च भिन्नक्रमस्तत एवं योज्यते, षष्टिरंगुलानि च जंबूद्वीपस्य गणितपदं भवतीति शेषः, इदमुक्तं भवति, यदि समचतुरस्राणि समस्त जंबूद्वीपस्य योजनप्रमाणानि खंडानि क्रियंते तदा यथोक्तसंख्यानि गव्यूताद्यधिकानि भवंति । तद्यथा, जंबूद्वीपस्य परिधिर्योजनानां तिस्रो लक्षाः

षोडश सहस्राणि सप्तविंशशतद्वयाधिकानीत्येवंरूपः पंचविंशत्या सहस्रैर्गुणनीयः, ततो भवंति सप्तकोटीशतानि नवतिः कोटयः षट्पंचाशल्लक्षाणि पंचसप्ततिः सहस्राणि ७९०५६७५०००, पुनर्गव्यूतत्रितयं पंचविंशत्या सहस्रैर्गुणितं जातानि पंचसप्ततिः सहस्राणि क्रोशानां ७५०००, एषां चतुर्भिर्भागे हृते लब्धा अष्टादश सहस्राः सप्तशती पंचाशदधिका योजनानां १८७५०, एषोऽकराशिर्मूलराशौ मीलनीयः, ततोऽष्टाविंशं धनुःशतं पंचविंशत्या सहस्रैर्गुणनीयं जातानि द्वात्रिंशद्धनुषां लक्षाणि ३२०००००, अष्टभिर्धनुःसहस्रैर्योजनं भवतीति कृत्वा तदानयनायाष्टभिरेव सहस्रैर्भागो ह्रियते, लब्धाश्चत्वारो योजनशताः ४००, एतेऽपि मूलराशिमध्ये प्रक्षेप्तव्याः, ततः सार्द्धत्रयोदशांगुलेषु पंचविंशत्यैव सहस्रैर्गुणितेषु लब्धानि त्रीणि लक्षाणि सप्तत्रिंशत्सहस्राणि पंचशताधिकानि ३३७५००, एषां धनुरानयनार्थं षण्णवत्या भागो ह्रियते, जातानि त्रीणि धनुःसहस्राणि पंचदशोत्तरपंचशताधिकानि ३५१५, षष्टिरंगुलानि चोपरिष्टात् । पुनर्गव्यूतानयनाय धनुःसहस्रद्वयेन भागे हृते लब्धं गव्यूतमेकं, अधस्तादुद्धरितानि पंचदश शतानि पंचदशोत्तराणि धनुषां १५१५ सर्वांकमीलने जातानि सप्त कोटीशतानि, नवतिकोट्यः, षट्पंचाशल्लक्षाणि, चतुर्नवतिः सहस्राणि, सार्द्धशताधिकानि समचतुरस्राणां योजनप्रमाणखंडानां, तथैकं गव्यूतं पंचदशोत्तराणि पंचधनुःशतानि षष्टिरंगुलानि च, ७९०५६९४१५०, गव्यू. १ धनुः १५१५ अंगुल ६०, इति सर्वजंबूद्वीपगणितपदं प्रपंचितं तत्प्रपंचितेन समर्थितं द्वितीयं योजनद्वारम् । ९ । १० ।

संप्रति क्रमायातं तृतीयं क्षेत्रद्वारं गाथायाः प्रथमपादेनाह

## भरहाइ सत्तवासा,

" भरहाइ त्ति, " वर्षाणि क्षेत्राणि मनुष्यनिवासस्थानानीत्यर्थः, तानि कियत्संख्यानि ? किंनामानि च भवंति इत्याह, सत्त त्ति सप्तसंख्यानि नामतस्तु भरतादीनि, आदिशब्दाद्धैमवतहरिवर्षमहाविदेहरम्यकैरण्यवतैरवतानां ग्रहः, तथा वर्षशब्दो नपुंसकलिंगः पुंस्त्वे प्रयुक्तोऽपि प्राकृतत्वात् न दोषाय, 'लिंगं व्यभिचार्यपि' इति वचनात्, अमूनि च सर्वक्षेत्राणि स्वाधिष्ठातृदेवतसमाननामानि । तथाहि—भरताधिपतिर्यो यो देव उत्पद्यते तं तं तत्सामानिकाद्या देवा 'भरत' इत्याह्वयंति, ततस्तन्नाम्ना तदधिष्ठितं क्षेत्रमपि भरतमिति कथ्यते । तथाचागमः—" से केणट्ठेणं भंते भरहे वासे इति ? गोयमा, भरहे देवे महड्ढीए, महज्जुए जाव पलिओवमट्ठिइए परिवसइ, से एएणट्ठेणं गोयमा, एवं वुच्चइ भरहे वासे " इति एवं हैमवतादिष्वपि भावनीयमिति संक्षेपार्थः । विस्तरार्थस्त्वयं—सर्वद्वीपसमुद्राणां मध्ये परिपूर्णचंद्रमंडलसंस्थानः सर्वतो लक्षयोजनमानो जंबूद्वीपोऽस्ति, स चैकया वज्रमय्याष्टयोजनोच्छ्रयया मूलमध्योपरितनविभागेषु क्रमेण द्वादशाष्टचतुर्योजनविस्तृतया वेदिकया सर्वतो वेष्टितोऽस्ति । यदागमः—सेणं जंबूद्दीवे एगा जगईए, सव्वओ समंता संपरिक्खित्ते साणं जगई अट्ठजोअणाइं उड्ढं उच्चत्तेणं, मूले बारसजोयणाइं विक्खंभेणं, मज्झे अट्ठजोअणाइं विक्खंभेणं, उवरिं चत्तारि जोअणाइं विक्खंभेणं, मूले विच्छिन्ना, मज्झे संखित्ता, उवरिं तणुआ, गोपुच्छसंठाणसंठिया, सव्ववइरामया, अच्छा सण्हा, जावपडिरूवत्ति "। तस्याश्चोपरिष्टादर्धयोजनोच्चः पंचधनुःशतविस्तीर्णो गवाक्षकटकः, तथा तस्या एव बहुदेशमध्यभागे गवाक्षकटकप्रमाणोच्छ्रायदैर्घ्या परिक्षेपेण जगतीसमाना, नानारत्ननिर्माणा, विविधपद्ममंडिता, पद्मवरवे-

दिकास्ति । यदुक्तं राजप्रश्नीयोपांगे—" से केणठ्ठेणं नंते एवं वुच्चइ, पउमवरवेइया ? गोयमा पउमवरवेइयाणं तत्थ तत्थ देसे तहिं तहिं वेइयासु, वेइयावाहासु य, वेइयाफलएसु य, वेइयापुडंतरेसु यं, खंभेसु, खंभवाहासु, खंभफलएसु, खंभपुडंतरेसु, सूईसु, सूईमुहेसु, सूईफलएसु, सूईपुडंतरेसु, पक्खेसु, पक्खवाहासु पक्खफलएसु, पक्खपुडंतरेसु, वहुयाइं, पउमाइं, कुमुयाइं, नलिणाइं, सुनगाइं, सोगंधियाइं, पुंडरीयाइं, सयवत्ताइं, सहस्सवत्ताइं, सव्वरयणामयाइं, अच्छाइं, पडिरूवाइं, महयावासिकयछत्तसमाणाइं, पण्णत्ताइं, समणाउसो, से एणं अट्ठेणं गोयमा, एवं वुच्चइ पउमवरवेइया " इति । तस्याः पार्श्वद्वयेऽपि द्वौ वनखंडौ वेदिकामानदैर्घ्यौ विद्येते, नवरं विस्तारेणाभ्यंतरः सार्द्धधनुःशतद्वयोनयोजनयुग्मप्रमाणो, वाह्यस्तु वनखंडोऽद्धाष्टमधनुःशतहीनयोजनयुग्ममानो, यतस्तत्र अन्यान्यप्यभ्यंतरात् वनखंडादधिकानि पंचधनुःशतानि जालकटकेनावरुद्धानि, परं श्रीमलयगिरिपादैर्नैतद्विवक्षितं, द्वयोरपि वनखंडयोरेकमेव मानमुक्तं, तत्त्वं तु वहुश्रुता विदंति । तस्यां च वेदिकायां मेरुपर्वतात्पंचचत्वारिंशद्योजनसहस्राणि दक्षिणस्यां दिश्यतिगत्य अष्टयोजनोच्छ्रायं चतुर्योजनविस्तारं प्रत्येकमेकैकक्रोशविस्तारया द्वारशाखया कलितं, ततः सामस्त्येन सार्द्धयोजनचतुष्टयविस्तारं वैडूर्यमयाभ्यां कपाटाभ्यां वज्रमय्या परिघया निर्जटितं, अनेकसामानिकसुरादिदेवाग्रमहिष्यादिदेवीकृतसेवार्द्धपल्योपमायुर्वैजयंतदेवाधिष्ठितं वे(वै)जयंताभिधानं द्वारमस्ति । तथा अमुतो द्वारात् उदीच्यां हिमवंतं पूर्वापरयोस्तु लवणोदन्वंतं यावद्भरतं भरतनामकं विजयक्षेत्रं तच्च वहुमध्यदेशभागे पूर्वापरयोर्लवणसमुद्रप्राप्तेन पंचाशद्योजनविस्तीर्णेन तदर्द्धोच्चेन रजतमयेन वैताढ्यपर्वतेन द्विधा कृतं, तेन दक्षिणभरतार्द्धमुत्तरभरतार्द्धं चेति भण्यते । हिमवत्पर्वतोर्ध्वतलस्थितात् पद्मह्रदान्निर्गताभ्यां प्रथमं पूर्वापरयोर्गत्वा स्वस्वनामधेयकूटादावृत्य दक्षिणां दिशमनुश्रित्य विजयाढ्यपर्वतं विभिद्य दक्षिणलवणोदधिं प्रविष्टाभ्यां गंगासिंधुभ्यां तच्च कृतषट्खंडं, तत्र च

प्राणिप्राणव्यपरोपणप्रवणांतःकरणम्लेच्छव्याप्तत्वादनार्याणि पंच खंडानि । एकं च वैताढ्यात् दक्षिणस्यां दिशि एकादशकला- धिकं चतुर्दशोत्तरं योजनशतमतिगत्य नवयोजनविस्तीर्णया द्वादशयोजनदीर्घया अयोध्यया नगर्या विराजितं, गंगासिंधुवैताढ्यदक्षि- णसमुद्राणां मध्यस्थितं जिनचक्रयर्द्धचक्रिप्रमुखोत्तमपुरुषाध्यासितमार्यं । उक्तं च—" आर्यावर्तो जन्मभूमिर्जिनचक्रयर्द्धचक्रिणा- मिति " । तथा वैताढ्येऽपाच्यां तमिस्रा गुहास्ति, सा च द्वादशयोजनायामा पंचाशद्योजनदैर्घ्या कृतकृतमालदेवनिवासा वेजयंतस- मानद्वारा, तस्याश्च बहुमध्यदेशे द्वियोजनांतराले प्रत्येकं त्रियोजनविस्तारे उन्मग्नजलानिमग्नजले नद्यौ स्तः । एवं प्राच्यां नृत्तमाल- देवाधिष्ठिता खंडप्रपातगुहा । तस्य च गिरेर्मूलाद्दशयोजनान्युत्प्लुत्य वेदिकावनखंडमंडितं पर्वतप्रमाणदैर्घ्यं प्रत्येकं दशदशयोजनविस्तारं विद्याधरनगरश्रेणिद्वयं विद्यते, किंच दक्षिणदिग्वर्त्तिन्यां श्रेणौ सुप्रजोज्जितजनपदैर्विराजितानि रथनूपुरचक्रवालपुरःसराणि पंचाशद्वि- द्याधरनगराणि, उत्तरश्रेणौ तु गगनवल्लभादीनि षष्टिः पुराणि, तेषु धरणेंद्रप्रकाशिताष्टाचत्वारिंशत्सहस्रमहाविद्याप्रसादोपनत- प्रकम्रसमस्तमनोरथातिथिपदार्थसमासादितपरमानंदसंदोहा, गगनगमनसामर्थ्यसमन्विता विद्याधराः सुखमासते । पुनर्दशयोजनान्युप- रिष्टादारुह्य विद्याधरश्रेणिसमाऽविषमोन्नतभूमिरिंद्राभियोगिकदेवकृतनिवासा श्रेणिद्वयी समस्ति । ततोऽपि पंचसु योजनेषूपरि दश- योजनानि विस्तीर्णं, वेदिकावनखंडमनोहरं, अनल्पकल्पवासिदेवक्रीडायोग्यं स्थानमास्ते । तत्र सपादषड्योजनोच्छ्रयाणि तावन्मूलवि- स्ताराणि उपरिष्टात् सार्द्धद्वादशक्रोशायामानि नव कूटानि । तथाहि, सिद्धायतन–दक्षिणार्द्धभरत–खंडप्रपात–माणिभद्र–वि- जयाढ्य–पूर्णभद्र–तमिस्रागुह–उत्तरार्द्धभरत–वैश्रमणनामानि, तेषु माणिभद्रविजयाढ्यपूर्णभद्रकूटानि हिरण्यमयानि, अपराणि षट् रत्नमयानि, प्रथमे पूर्वदिग्वर्त्तिनि (कूटे) क्रोशदैर्घ्यं क्रोशार्द्धविस्तीर्णं चत्वारिंशदर्गलचतुर्दशधनुःशतोच्छ्रायं सिद्धायतनं, तस्मिन् पंचधनुः-

शतोच्चानि तदर्द्धविस्ताराणि त्रीणि द्वाराणि तिसृषु दिक्षु । तद्यथा—प्राच्यां प्रथमं द्वारं, द्वितीयं दक्षिणस्यां, तृतीयमुदीच्यां, प्रतीच्यां तु न किंचिदिति । किंच सर्वेषु सिद्धायतनेषु प्रासादेषु च जंबूद्वीपमध्येऽयमेव द्वारदिग्विभागः, तस्य हि बहुमध्यदेशे क्रोशचतुर्थांशायामविष्कंभा तदर्द्धपृथुला मणिपीठिका, तस्या उपरि पंचधनुःशतायामविस्तारः तदधिकोच्छ्रायो देवच्छंदकः, तत्राष्टोत्तरं शतं प्रतिमाः, ता हि जघन्यतः सप्तहस्तप्रमाणा उत्कर्षतः पंचधनुःशतोच्चा ऋषभवर्द्धमानचंद्राननवारिषेणाख्याः संति । पूर्णकलशनागदंतशालभंजिकाजालकटकादिरचनाविशेषाः सर्वचैत्येषु ज्ञेयाः । ततः परं भरतार्द्धकूटं, तत्र भरतदेवस्य सिद्धायतनप्रमाणः प्रासादः, खंडप्रपाततमिस्रागुहयोर्नृत्तमालकृतमालौ देवौ, अन्येषु पंचसु स्वनामानो देवाः प्रासादेषु विलसंति । तथा हिमवन्नितंबे दक्षिणदिशि मूले द्वादश योजनानि उपरि चत्वारि विस्तीर्णोऽष्टयोजनोच्छ्रय ऋषभदेवनिवासो रत्नमय ऋषभकूटनामा पर्वतोऽस्ति । स च ' भूमिकूट ' इति इह प्रकरणे प्रसिद्धः, चक्री षट्खंडां वसुंधरां विजित्यास्मिन् स्वनाम लिखति ।

भरतमुत्तरेण पूर्वापरयोर्लवणसमुद्रं प्राप्तो भरताद् द्विगुणविस्तारो योजनशतोच्छ्रायो हेममयो हिमवान् वर्षधरः, तदुपरि बहुमध्यदेशभागे योजनसहस्रदैर्घ्यः तदर्द्धविस्तरो दशयोजनावगाढो जलपूर्णः पद्महदः, तस्य रजतमयं कूलं, वज्रमयपाषाणश्चतुर्दिशि मणिसोपानाः, तन्मध्ये योजनायामविस्तारं अर्द्धयोजनपिंडं दशयोजनोच्चनालं गव्यूतद्वयं जलादुपरि स्थितं पद्मं विद्यते, वज्रमयं तस्य मूलं, अरिष्टमयः कंदः, वैडूर्यमयो नालः बाह्यपत्राणि च, मध्यानि तु जांबूनदमयानि, कनकमयीकर्णिका, स्वर्णमयानि केसराणि, विविधमणिमयं पुष्करं, सा च कर्णिका द्विगव्यूतप्रमाणा पृथुला त्वेकं गव्यूतं, तस्या उपरि, पीठिकादेवच्छंदकादियुतं श्री-

देवीभवनं, एतादृशेनार्द्धप्रमाणेन कमलानामष्टशतेन वृतं, तत्र श्रीदेव्या आभरणानि, तद्बाह्येषु वायव्यौदीच्यैशानेषु दिग्भागेषु चत्वारि कमलसहस्राणि ४०००, तेषु तावंत एव सामानिका देवा देव्यो वा। पूर्वस्यां दिशि चतुर्षु पद्मेषु चतसृणां महामंत्रिसदृशीनां स्थानानि, आग्नेय्यामष्टसु पद्मसहस्रेषु श्रीदेव्या अभ्यंतरायां पर्षदि देवानामष्टौ सहस्राः ८०००, दक्षिणस्यां दिशि दशसु पद्मसहस्रेषु १०००० तावंत एव मध्यपर्षदि मित्रस्थानीया देवाः, नैर्ऋत्यां द्वादशसु पद्मसहस्रेषु १२००० तावंत एव किंकरस्थानीयाः सुराः बाह्यपर्षदि। पश्चिमायां सप्तसु पद्मेषु सप्तानामनीकाधिपतीनामाश्रयाः, तथा चतसृषु दिक्षु पूर्वादिकासु षोडशसु पद्मसहस्रेषु १६००० आत्मरक्षकदेवानां स्थानानि, एतद्वेष्टनकत्रयं मध्यं। अपरेऽपि बाह्याः त्रयः परिरयाः, तेष्वभ्यंतरे परिक्षेपे द्वात्रिंशल्लक्षाणि ३२०००००, मध्यमे चत्वारिंशच्छतसहस्राणि ४००००००, अष्टाचत्वारिंशल्लक्षाणि ४८००००० पद्मानां बाह्ये भवन्ति। एवं सर्वाग्रेण एका कोटी, विंशतिलक्षाणि, पञ्चाशत्सहस्राणि, विंशत्यधिकमेकं शतं च १२०५०१२० पद्महृदे पद्मानि। महापद्मादिष्वप्येवैव कमलानां संख्येति। तस्मात्तु हृदात् पूर्वद्वारतोरणात् पंचयोजनशतानि, पूर्वस्यां पर्वतोपरि गत्वा गंगावर्त्तकूटादावर्त्त्य दक्षिणाभिमुखं पंचयोजनशतानि त्रयोविंशानि साधिकाऽध्युष्टकलायुतानि अतिक्रम्य द्विगव्यूतदीर्घान्मकरमुखान्निःसृत्य गंगाप्रपातकुंडे निपतति। तच्च कुंडं षष्टियोजनायामविस्तारमुपरिष्टात्, अधस्तु दशयोजनन्यूनं दशयोजनावगाढं वज्रमयतलं त्रिद्वारतोरणसोपानादियुतं, तन्मध्ये गंगाद्वीपोऽष्टयोजनायामविष्कंभो गव्यूतद्वयं जलादुपरि गतः, तन्मध्ये भवनं, तत्र पीठिकायां गंगादेव्याः शय्येति। ततो दक्षिणतोरणाद्विनिर्गत्य विजयाढ्यपर्वतं जगतीं च विभिद्य चतुर्दशनदीसहस्रपरीता जलधिं प्रविवेश गंगा। तस्या हृदाद् विनिर्गमे मकरमुखे कुंडात्प्रवाहे च सक्रोशानि

षट् योजनानि विस्तारः क्रोशार्द्धमुद्वेधः मुखप्रस्तारः प्रवाहाद् दशगुणः । उक्तं च—"जो जीसे वित्थारो, सलिलाए होइ आ-वंतीए । सो दसहिं परिपुन्नो मुहवित्थारो मुणेयव्वो" ॥ १ ॥ उद्वेधस्तु सर्वत्र प्रस्तारात्पंचाशत्तमो भागः । यत उक्तं—"जो जत्थउ वित्थारो, सलिलाए होइ जंबुदीवंमि । पन्नासइमं भागं तस्सुव्वेहं वियाणाहि" ॥ १ ॥ तथाऽस्या अपि द्वे तटे वेदिकावन-खंडवती, न चैतत्स्वाहच्छिकं । तदागमः—" गंगाणं महानइ उभओ पासे हिं दोहि य पउमवरवेइयाहिं दोहि य वणसंडेहिं संपरिखित्ता " । एवं पश्चिमतोरणद्वारान्निर्गता सिंध्वावर्त्तकूटादावर्त्य विवृतमुखाकारात् नालान्निपत्य सिंधुदेवीनिवासं कुंडं मध्येकृत्य तथैव जलधिं गता सिंधुनदी । तथोत्तरतोरणाद्विनिर्गता गंगाद्विगुणमानपरिवारा स्वनामकुंडे निपत्य शब्दापातिनं गव्यूतद्वयेनास्पृशंती हैमवतं क्षेत्रं मध्येकृत्यापरोदधिं गता रोहितांशा । हिमवति सर्वरत्नमयान्येकादश कूटानि । तद्यथा—सिद्धायतन १ क्षुल्लहिमवत् २ भरत ३ इला ४ गंगा ५ श्री ६ रोहितांशा ७ सिंधु ८ सुरा(देवी) ९ हैमवत १० वैश्रमणाख्यानि ११ तेषां मूलविस्तार उच्चत्वं च पंचयोजनशतानि, शि-खरविस्तारस्तु तदर्द्धमानः, प्रथमकूटे (क्षुल्लनाम्नि) सिद्धायतनं पंचाशद्योजनानि दीर्घं तदर्द्धं पृथुलं षट्त्रिंशद्योजनोच्छ्रयं, तस्मिन् त्रीणि द्वाराणि, तेषामायामोऽष्टौ योजनानि, तदर्द्धं विष्कंभः, अष्टयोजनायामविष्कंभा तस्य मध्ये मणिपीठिका, सा च चत्वारि योजनानि पृथुला, तदुपरि देवछंदकस्तत्प्रमाणः आयामोच्छ्रायाभ्यां किंचिदधिकः । तत्र प्रतिमा यथा वैताढ्यायकूटे प्रोक्ताः । शेषेषु दशसु कूटेषु सार्द्धद्वाषष्टियोजनोच्छ्रायाः सक्रोशैकत्रिंशद्योजनविस्ताराः सिंहासनादियुताः प्रासादाः संति ।

हिमवन्महाहिमवतोरंतराले भरताच्चतुर्गुणविस्तारं पूर्वापरयोर्लवणसमुद्रं प्राप्तं स्वनामदेवाधिष्ठायकं दशविधकल्पपादपप्रभावो-

एगं च बावट्ठं जोयणसयं ( ३१६२ ) किंचि विसेसाहियं परिक्खेवेणं सव्वरयणामए अच्छे इत्यादि "। उमास्वातिवाचकोऽप्येवमेवाह तथा च तद्वाक्यं " वृत्तो विविधरत्नमयः सर्वतः साहस्रः शब्दापातिगिरिरिति " अत एतद्वर्णके यत्क्षेत्रसमासे ' रययमया ' इत्युक्तं, तन्न संवावदीति, किंतु ' रयणमया ' इति संवादी पाठ इति । तथा तदुपरि स्वान्निधानदेवन्नवनं हिमवत्कूटप्रासादसदृशं ।

तदुत्तरो हैमवतक्षेत्राद् द्विगुणविस्तारोऽर्जुनमयो योजनशतद्वयोच्चो महाहिमवान्, तत्र बहुमध्ये पद्मह्रदाद् द्विगुणायामविष्कंभो महापद्मह्रदः कृतह्रीदेवीनिवासः पद्मानि पद्मह्रदसंख्या( संनिभा )न्यत्र, एतद्दक्षिणतोरणान्निःसृत्य पंचकलाधिकानि पंचोत्तराणि षोडशयोजनशतानि पर्वतमुल्लंघ्य रोहितादेव्यधिष्ठिते गंगाप्रपातकुंडाद् द्विगुणायामविष्कंभे दशयोजनोद्वेधे रोहिताप्रपातकुंडे निपत्य शब्दापातिनं चतुर्थांशेन परिधाय गव्यूतद्वयेनास्पृशंत्यष्टाविंशत्या नदीसहस्रैः समं रोहितांशासमविस्तारा रोहिता पूर्वोदधिं प्राविशत् । तथोत्तरद्वारान्निर्गत्य प्रवाहे पंचविंशतियोजनायामा मुखे तु दशगुणविस्तारा स्वनाम्नि कुंडे निपत्य एकयोजनास्पृष्टगंधापातिका प्रवाहे मुखे च क्रमेणार्धपंचयोजनोद्वेधा षट्पंचाशन्नदीसहस्रसहिता हरिकांता पश्चिमोदधिं गता । तस्मिन् पर्वतेऽष्टौ कूटानि, तद्यथा—सिद्धायतन–महाहिमवत्–हैमवत–रोहिता–ह्री–हरिकांता–हरिद्–वैडूर्यनामानि, हिमवत्कूटतुल्यानि स्वनामधेयदैवतानि ।

तस्मादुत्तरस्यां दिशि हरिवर्षं क्षेत्रं तत्र युगलिनः प्रागुक्तयुगलिकेभ्यो द्विगुणविशेषणाः केवलं कृतचतुःषष्टिदिनापत्यपालनाः षष्ठभांते विहिताहाराश्च, तस्य बहुमध्यदेशभागेऽरुणदेववसतिः शब्दापातिविशिष्टो गंधापाती । कालस्तु तत्र सुषमारूपः सदैव ।

तदुत्तरो हरिवर्षक्षेत्राद् द्विगुणविस्तारश्चतुःशतयोजनोच्छ्रयस्तपनीयमयो निषधगिरिः, तदुपरि महापद्माद् द्विगुणायामविष्कंभो दशयोजनावगाढः पद्महदविशिष्टपद्मपूर्णः कृतधृतिदेवीनिवासः तिगिंछिहृदः, तद्दक्षिणदिग्भागे सैककलानि सप्तसहस्राणि चत्वारि शतानि एकविंशानि योजनानां पर्वतमुल्लंघ्य स्वनामकुंडं मध्येकृत्य हरिकांतावत् केवलं पूर्वोदधिं गता हरित्सलिला । उत्तरेण शीतोदा निर्गता, तस्याः प्रवाहो जिह्विका च पंचाशद्योजनानि, हरिन्नदीकुंडाद् द्विगुणकुंडा, निषध-देवकुरु-सूर्य-सुलस-विद्युत्प्रभहृदान् विभिद्य चतुरशीत्या नदीसहस्रैरन्विता, भद्रशालवनमध्यप्रवृत्ता, योजनद्वयांतरे मंदरमप्राप्ता, अपरदिगभिमुखं विद्युत्प्रभविदारिकाऽ परविदेहं द्विधा विधाय एकैकस्माद्विजयादष्टाविंशतिनदीसहस्रानुगता, जयंतद्वारादधो जगतीं विदार्य पंचशतयोजनायामा, दशयोजनो- द्वेधा, पश्चिमजलधिं ( जलधिमधि ) गता । तस्मिन् पर्वते नव कूटानि, तद्यथा-सिद्धायतन-निषध-हरिवर्ष-प्राग्विदेह-हरि-धृति- शीतोदा-ऽपरविदेह-रुचकाभिधानानि, हिमवत्कूटसदृशानि ।

निषधादुत्तरो वैडूर्यमयस्तिगिंछिप्रतिच्छंदः केशरिहृदप्रष्ठो नीलवान् वर्षधरः, तत्र नव कूटानि, तथाहि- सिद्धायतन- नील-प्राग्विदेह-शीता-कीर्ति-नारी-अपरविदेह-रम्यक-उपदर्शनकूटाख्यानि निषधकूटमानानि । ततः केसरि-हृदाद् दक्षिणदिशि सैककलानि सप्तयोजनसहस्राणि चत्वारि शतान्येकविंशत्यधिकानि पर्वताधित्यकामुल्लंघ्य, स्वनामदैवतकुंडं मध्येकृत्य, नीलोत्तरकुरु- चंद्र-ऐरवत-माल्यवत-हृदान् विभिद्य, भद्रशालसत्कचतुरशीतिनदीसहस्रपरीता, माल्यवद्विदेहविजयद्वारच्छेदिनी, पूर्वोदधिं गता शीता, शेषं शीतोदावत् ।

निषधनीलवदंतरा महाविदेहो लक्षयोजनानि तस्य मध्यदैर्घ्यं विष्कंभस्तु निषधाद् द्विगुणः

तन्मध्ये सहस्रयोजनावगाढो नवनवतियोजनसहस्रोच्चः भूमितले दशसहस्रविस्तारः उपरि सहस्रयोजनायामः रत्नमध्यः स्वर्णमयो मेरुगिरिः । तदुपत्यकायां पूर्वापरयोर्द्वाविंशतियोजनसहस्रायामं उत्तरदक्षिणयोस्तु प्रत्येकं सार्द्धयोजनशतद्वयविस्तारं, नानाद्रुमकलितं, भद्रशालवनं । तन्मध्ये मेरुपर्वतात् पंचाशता योजनैर्हिमवत्सिद्धायतनप्रमाणानि चतुर्दिश्यानि चत्वारि सिद्धायतनानि । तावतैव विदिक्षु पंचाशत्पंचाशद्योजनायामास्तदर्द्धविष्कंभा दशदशयोजनावगाढाश्चतस्रश्चतस्रो वाप्यः । तन्नामानि यथा—पद्मा१ पद्मप्रभा२ कुमुदा३ कुमुदप्रभा४, उत्पलगुल्मा१ नलिनी२ उत्पला३ उत्पलोज्ज्वला४, भृंगा१ भृंगनिभा२ अंजना३ कज्जलप्रभा४, श्रीकांता१ श्रीमहिता२ श्रीचंद्रा३ श्रीनिलयाः४ पुर्वोत्तरक्रमादवगंतव्याः, तन्मध्ये प्रासादाः पंचशतयोजनोच्चास्तदर्द्धविस्ताराः सिंहासनरुचिराश्चत्वारः, तेषु दाक्षिणात्यौ सौधर्मेन्द्रस्य, औदीच्यौ त्वीशानेन्द्रस्य। शीताशीतोदयोर्नद्योः कुलद्वयेऽपि द्वौ द्वौ कूटपर्वतौ दिग्गजनामानौ, तन्नामानि शीतानद्या उत्तरदिग्भागादक्षिणावर्त्तनेन गण्यानि, तानि चेमानि—पद्मोत्तर—नील—सुहस्त—अंजन—कुमुद—पलाश—अवतंस—रोचन(ना) इति एते कूटगिरयः स्वनामदेवाः । ततो मेरुमूलाद्उत्पत्य योजनानां पंचशत्या नंदनं वनं । तत्र दिक्षु चतसृष्वपि हिमवत्कूटसमानि चत्वारि सिद्धायतनानि, विदिक्षु प्राग्वत् प्रासादान्विताः पुष्करिण्यः, तथाहि—नंदोत्तरा—नंदा—सुनंदा—नंदिवर्द्धना, नंदिषेणा—अमोघा—गोस्तूपा—सुदर्शना, भद्रा—विशाला—कुमुदा—पुंडरीकिणी, विजया—वैजयंती—जयंती—अपराजिता। अस्यां मेखलायामष्टौ दिक्कुमारीणां कूटानि, तथाहि—नंदन—मंदर—निषध—हैमवत—रजत—रुचक—सागरचित्र—वज्रनामानि, । एतेष्वष्टौ दिक्कुमार्योऽवतिष्ठंते, ताश्चेमाः—मेघंकरा—मेघवती—सुमेघा—मेघमालिनी—सुवत्सा—वत्समित्रा—वारिषेणा—बलाहकेति । एता देव्यो

तथा चतसृष्वपि मेरोर्विदिक्षु गजदंताकारवक्षस्कारनामानः पर्वताः संति । इदमुक्तं भवति, यथा गजस्य दंता मूले स्थूला-स्ततः क्रमेण हीयमाना यावदंते सूक्ष्माः, एवमेतेऽपि, आदौ निषधनीलवंतौ निकषा चतुर्योजनशतोच्चाः पंचयोजनशतविस्ताराः, तत उच्चत्वे क्रमेण वर्द्धमाना विस्तारे तु हीयमानास्तुरगकंधराकृतयो यावन्मेरुसमीपं पंचयोजनशतान्युच्चा अंगुलासंख्येयभागविस्तारा भवंति । ते चामी–आग्नेय्यां रजतमयः सप्तकूटपरिष्कृतः सौमनसः १ नैर्ऋत्यां तपनीयमयो नवकूटान्वितो विद्युत्प्रभः २ वायव्यां हिरण्मयः सप्तकूटो गंधमादनः ३ ऐशान्यां वैडूर्यमयो नवकूटांकितो माल्यवान् ४ प्रत्येकमेतेषां त्रिंशद्योजनसहस्राणि नवोत्तरं शतद्वयं कलाषट्कं चायामः, सर्वेषु प्रथमे प्रथमे कूटे सिद्धायतनं, कूटानि चामूनि हिमवत्कूटप्रमाणानि, एतेषां नामानि मेरुदिग्विभागाद् गणनीयानि, तथाहि—सौमनसे वक्षस्कारगिरौ सिद्धायतन–सौमनस–मंगलापाति–देवकुरु–विमल–कांचन–वशिष्ठानि । पंचमषष्ठयोस्तोयधराविचित्रदेवते । तथा विद्युत्प्रभे–सिद्धायतन–विद्युत्प्रभ–देवकुरु–पद्म–कनक–स्वस्तिक–शीतोदा–सदाजल–हरिनामानि, कनकस्वस्तिककूटयोः पुष्पमालाअनिंदितदेवते । तथा गंधमादने–सिद्ध–गंधमादन–गंधलावत्–उत्तरकुरु–स्फटिक–लोहित–आनंदानि । पंचमषष्ठयोर्भोगंकराभोगवत्यौ देव्यौ । तथा मालवति–सिद्ध–माल्यवत्–उत्तरकुरु–कच्छ–सागर–रजत–शीतापूर्णभद्र–हरिसहानि, सागररजतयोस्सुभोगाभोगमालिन्यौ देव्यौ । शेषाणि स्वनामतुल्यदैवतानि । एतेषु हरिस्सहहरिकूटे सहस्रयोजनोच्छ्रायायामे उपरिष्टात्तु पंचयोजनशतविस्तारे, शेषाणि प्राक्कथितप्रमाणानि ।

मंदरगंधमादननीलवन्माल्यवतां मध्ये उत्तरकुरुक्षेत्रं, तच्चैकादशयोजनसहस्राणि द्विचत्वारिंशान्यष्टौ शतानि च कलाद्वया-

१. मेरुसमीपे इत्यर्थः ।

धिकानि विस्तीर्णे, तत्र मिथुनधर्माणो युगलिनस्त्रिगव्यूतोच्चा अष्टमभक्तावसानकृताहारास्त्रिपल्यपरमायुषः षण्णधिकार्द्धतृतीयशतपृष्टकरंडकांकिततनवः सुषमसुषमाकालमनुभवंतः कल्पद्रुफलसंतुष्टा एकोनपंचाशद्दिनान्यपत्यानि पर्यंते प्रतिपाल्य सुखमृत्यवो देवेषूत्पद्यंते ।

अथ शीतायाः प्राच्यामपाच्यां च नीलवतस्तु याम्यायामष्टौ शतानि चतुस्त्रिंशानि याद्दशैः सप्तभिर्योजनं भवति तादृशांश्चतुरो भागांश्चातिक्रम्य द्वौ यमकपर्वतौ, तयोर्मूलविस्तार उच्चत्वं च सहस्रं योजनानि, उपरि तदर्द्धविस्तारः, तयोरुपरि कनकमयौ प्रासादौ, हिमवद्वत् तावति च । दक्षिणदिशि नीलाद्या ह्रदाः । उक्तंच—"जावइयंमि पमाणंमि हुंति जमगा नीलवंताओ । तावइयमंतरं खलु, जमगदहाणं दहाणं च" ॥ १ ॥ ते च उदग्दक्षिणयोर्दीर्घाः पूर्वापरयोस्तु विस्तीर्णाः पद्मह्रदप्रमाणाः स्वनामदेवनिवासाः, तेषां प्रागपरयोर्दिशोरेकैकस्य दश दश कांचनगिरयः स्वनामदेववसतयः, तेषां उच्चत्वं मूलविस्तारश्च शतं शतं योजनानि, उपरि तु पंचाशद्योजनानि, परस्परं शिखरव्यवधानं शतं शतं योजनानां, मूले तु नास्त्यंतरं ।

तथा शीतायाः प्राच्यां पंचशतयोजनायामविस्तारं अभ्यंतरे द्वादशयोजनपृथुलं क्रमेण हीयमानं यावदंतेऽर्द्धयोजनमानं जंबूनदमयं जंबूपीठमस्ति, तच्च द्विगव्यूतोच्चया पंचधनुःशतविस्तीर्णया पद्मवरवेदिकया परिक्षिप्तं, तस्य चतुर्ष्वपि दिक्षु द्विक्रोशोच्छ्रयाणि तदर्द्धविस्ताराणि ध्वजतोरणवंदनमालाविभासितानि चत्वारि द्वाराणि । तथा च बहुमध्ये चतुर्योजनोच्छ्रया अष्टयोजनायामा मणिपीठिका, तस्या उपरिष्टाद् जंबूवृक्षः, स चाष्टयोजनविष्कंभोच्छ्रयः वज्रमयमूलः, तस्यावगाहः स्कंधश्च द्वे योजने, षड्योजनदैर्घ्यो

शाखाः ताश्च सौवर्णाः, स्कंधः पत्राणि च वैडूर्यमयानि, प्रवालमयाः पल्लवाः, रत्नमयानि फलानि। प्राच्ये शाले भवनं, तत्र मणिपीठिकायामनादृतदेवस्थानं, शेषेषु प्रासादाः, मध्ये सिद्धायतनं, सर्वाणि विजयार्द्धप्रमाणानि, तत्परिवेष्टनेऽष्टोत्तरं शतं जंबूनां, परिवारजंबूसंख्या पद्महृदवत्, एतदधिपतिरनादृतो देवः, ततः पंचाशतं योजनान्यतिगम्य प्रथमवनखंडे चतसृषु दिक्षु भवनानि, विदिक्षु चतसृणां पुष्करिणीनां मध्ये प्रासादाः, भवनप्रासादमध्येऽष्टौ कूटानि ऋषभकूटप्रमाणानि जांबूनदानि, तेषु सिध्दायतनानि शाल्विवनपूर्वोत्तरादिप्रासादेषु सिंहासनानि।

मंदराद्दक्षिणे देवकुरुः, निषधोत्तरौ चित्रविचित्रौ यमकवत्, हृदास्तु निषधादयः, तदपरार्द्धे गरुडावासः शाल्मलितरुः जंब्वा सदृशवर्णकः।

प्रागपरयोर्द्वात्रिंशद्विजयाः। तथाहि—प्राग्विदेहः शीतया अपरविदेहस्तु शीतोदया द्विधाकृतः, पुनरेकैको विभागश्चतुर्भिर्वक्षस्कारैः तिसृभिस्तिसृभिश्चांतर्नदीभिरंतरा निपत्याष्टधा कृतः, ततोऽष्टभिश्चत्वारो गुणिता जाता यथोक्तसंख्या विजयाः, तथा दाक्षिणात्या गंगासिंधुभ्यां नदीभ्यां, औदीच्यास्तु रक्तारक्तोदाभ्यां विभज्य त्रिधाकृताः। पुनः प्रतिविजयं वैताढ्येन निपत्य षट् खंडानि कृतानि। उक्तं च "विजयं परिक्खेयड्ढो, गंगासिंधुसमाउत्ति नई। तेहिं कया छखंडा, विदेह वत्तीस विजयाणं" ॥ १ ॥ तत्रैकस्य विजयस्यायामः षोडशयोजनसहस्राणि द्विचत्वारिंशान्यष्टौ शतानि कलाद्वयाधिकानि, तथा विस्तारो द्वाविंशतिशतानि त्रयोदशोत्तराण्यर्द्धगव्यूतानि निषधनीलवर्णेर्नितंबे प्रतिविजयमेकैकमृषभकूटं, शीताशीतोदयोर्गंगासिंधुसंगमे क्रमेण मागधप्रभासौ तीर्थे,

१ शाखायां॥

अयोध्याः, एताः सर्वाः पुर्यो भरतायोध्याप्रतिकृतयः इति। इह वक्षस्कारांतर्नदीविजयपुरीणां सर्वेषां गणनाक्रमो माल्यवद्वक्षस्कारादव-गंतव्यः। तथा विजयादीनां वैताढ्येषु प्रत्येकं पार्श्वद्वयेऽपि पंचपंचाशत्पंचपंचाशन्नगराणि संति। यतो नितंबद्वयमपि समानदैर्घ्यं, भरतैरावतयोस्तु धनुष्पृष्ठाकारत्वान्मध्यबाह्ययोः पार्श्वयोर्महदंतरमतः तत्रैकस्यां दिशि पंचाशदन्यस्यां तु षष्टिः सजनपदानि पुराणीति।

नीलवतः परतो रम्यकं क्षेत्रं हरिवर्षवत् केवलं, नाम्ना माल्यवानिह वृत्तवैताढ्यः,

ततः परो महाहिमवत्प्रतिच्छायो रुक्मी शैलः, तदुपरि बुद्धिदेवीनिवासो महापद्मप्रतिरूपो महापुंडरीको ह्रदः, कूटानि अष्टावत्र तानि चामूनि सिद्ध—रुक्म—रम्यक—नरकांत—बुद्धि—रौप्य—*हैरण्यवंत—मणिकांचननामानि। तत्र दक्षिणानरकांतापूर्वगाहरिकांतावत्, रूप्यकूलोत्तराऽपरदिग्गामिनी रोहितावत्।

तदंतरं हैरण्यवतक्षेत्रं हैमवतप्रख्यं, नवरं तन्मध्ये नामतो विकटापाती वृत्तवैताढ्यः प्रभासदेवाधिवासः, किं च सर्वेऽपि वृत्त-वैताढ्या एकप्रमाणवर्णाः

तदुत्तरः स्वर्णमयः शिखरिवर्षधरः लक्ष्मीनिवासः पद्मविशिष्टः पुंडरीको ह्रदस्तत्र, तस्माद् दक्षिणां दिशमाश्रित्य रोहितांशासदृशी सुवर्णकूला, रक्तारक्तवत्यौ तूत्तरगे गंगासिंधू इव प्रमाणतः। तदुपरिष्टाचैकादशकूटानि, तद्यथा—सिद्धायतन—शिखरि—हैरण्यवत—×सुरादेवी—रक्ता—लक्ष्मी—सुवर्णा—रक्तोदा—गंधापाति—ऐरवत—तिगिंछिसंज्ञानि हिमवतकूटसदृशि,

---

* 'ऐरण्यवत' इति क्वचित्। × इलादेवी इत्यपि पाठः

सर्वक्षेत्राणामुत्तरदिगवस्थितं भरतप्रतिकल्पमैरवतं, वैताढ्यस्तु व्यत्ययनगरसंख्य इति । तथाऽस्माज्जंबूद्वीपादसंख्येषु द्वीपसमुद्रेष्वतिक्रांतेषु कश्चिद् जंबूद्वीपाभिधानो द्वीपोऽस्ति, तस्मिन् सर्वे विजयादिद्वारवर्षधरपर्वतकूटनदीह्रदवृक्षविजयाद्यधिष्ठातॄणां देवानां राजधान्यः संति । उक्तं च जंबूद्वीपप्रज्ञप्तौ " रायहाणीओ जंबूद्दीवे२ मंदरस्स पव्वयस्स दाहिणेणं तिरियं असंखिज्जे दीवसमुद्दे वीइवइत्ता अन्नंमि जंबूद्दीवे२ बारसजोयणसहस्साइं उगाहेत्ता इत्थणं रायहाणीओ भाणियव्वाओ । " तासां विशेषवर्णनं क्षेत्रसमासबृहद्वृत्तेरवसेयमिति समस्तप्रकरणसमुदायार्थः

अथ पुनरक्षरार्थो भणिष्यते, तत्र व्याख्यायमानक्रमागतं चतुर्थं पर्वतद्वारमाह—

**खित्ताणं विजयाणं वियड्ढ चउ चउरतीस वट्टियरे । सोलस वक्खारगिरी, दो चित्तविचित्त दो जमगा॥११॥**

**दोसय कणयगिरीणं, चउ गयदंता य तह सुमेरू य । छ वासहरा पिंमे, एगुणसत्तरी सया दुन्निः॥१२॥**

एषां क्षेत्राणां द्वात्रिंशतो विजयानां च मध्यवर्त्तिनो वैताढ्याः, ते च क्रमेण चत्वारश्चतुस्त्रिंशच्च वृत्ता वर्त्तुलाकारा इतरे तद्विपरीता दीर्घा इत्यर्थः, इदमुक्तं भवति, चत्वारो वृत्तवैताढ्यास्तेषां स्थानं प्रमाणं च प्रागेवोक्तं क्षेत्रसमासानुसारेण, सिद्धांतस्तवनाद्यानां त्रयाणां स्थानकथनेन व्यवस्थितः, तथाहि—शब्दापाती, तद्वद् हरिवर्षे विकटापाती, रम्यके गंधापाती, हैरण्यवते माल्यवानिति । तथा च तद्ग्रंथः—" कहिणं भंते हरिवासे वियडावईनामं वट्टवेयड्ढे पन्नते, गोयमा, हरिसलिलाए महानईए पच्चच्छिमेणं हरिकंताए महानईए पुरिच्छिमेणं, हरिवासस्स बहुमज्झदेसभागे, इत्थणं वियडावईणामं वट्टवेयड्ढे पण्णत्ते, तथा

कहिणं भंते रम्मएवासे गंधावईनामं वट्टवेयड्ढे पन्नत्ते, गो. नरकंताए पच्चच्छिमेणं, नारीकंताए पुरच्छिमेणं, रम्मयवासस्स बहुमज्झदेसभागे गंधावईनामं वट्टवेयड्ढे पन्नत्ते तथा कहिणं भंते एरण्णवए वासे मालवंतपरियाएनामं वट्टवेयड्ढे पन्नत्ते " इति, तत्त्वं पुनः केवलिनो विदंति। दीर्घवैताढ्यास्तु द्वात्रिंशत् विदेहेषु प्रतिविजयमेकैकस्य भावात्, द्वौ च भरतैरावतयोः, सर्वमीलने चतुस्त्रिंशत्, वक्षस्कारगिरयः षोडश चित्रादयो ये विजयच्छेदिनः, तथा द्वाविति द्विसंख्यौ, कावित्याह–' चित्तविचित्तेति ' प्राकृतशैल्या विभक्तिलोपः। ततः चित्रश्च विचित्रश्च चित्रविचित्रौ, एतयोर्हि निषधमुत्तरेण शीतोदाया अपरस्यां चित्रगिरिः प्राच्यां तु विचित्रः, तथान्यौ द्वौ यमकौ नीलवतो दक्षिणतः शीतायाः प्रागपरस्थितौ, एतेषां चतुर्णां समुदितानामपि ' यमका ' इति क्वचित्संज्ञा दृश्यते। कनकगिरयः कांचनगिरयः तेषां द्वे शते शतद्वयं, तद्यथा–कुरुषु समुदिता नीलवदादयो दश ह्रदाः, एकैकस्य ह्रदस्य वामतो दक्षिणतश्च प्रत्येकं दश दश कनकनगाः ततः पार्श्वद्वयेऽपि विंशतिः विंशतिः सर्वमीलने जातं शतद्वयं, तथा गजदंताकारत्वात् गजदंता विद्युत्प्रभादयश्चत्वारः ते हि मेरोर्विदिक्षु स्थिताः, तथेति साद्दश्योपन्यासार्थः, चः समुच्चये, सुष्ठु मनोहरः सुवर्णरत्नमयत्वात्, मेरुमंदरः, वर्षधरा हिमवदादयः षड्। सर्वसंख्यामाह–' पिंडेत्यादि ' पिंडे सर्वसमूहे एकोनसप्तत्यधिके द्वे शते भवत इति शेषः १२

उक्तं पर्वतद्वारमधुना कियत्सु पर्वतेषु कियंति कूटानि भवंति ? इति पंचमद्वारमाह–

**सोलसवक्खारेसु, चउचउकूडा य हुंति पत्तेयं। सोमणस गंधमायण सत्तट्ठय रूप्पिमहहिमवे ॥१३॥**

सोलसेत्ति–षोडशसु चित्रादिषु वक्षस्कारनगेषु चत्वारि चत्वारि कूटानि पर्वतस्योपरिष्टादुच्चैर्गतानि शृंगाणि, ' कूटा-

नीति '' सामयिकी संज्ञा । तथा सौमनसगंधमादनयोः सप्त सप्त, इह विभक्तिलोपो वीप्सा तूत्तरत्रापि प्राकृतशैल्या विज्ञेया । चःपुनरर्थे । रुक्मिमहाहिमवतोर्वर्षधरयोरष्टावष्टौ, एकमेकं प्रति प्रत्येकं, ततः प्रत्येकं कूटानि भवंतीति सर्वत्र योज्यं ॥ १३ ॥

**चउतीस वियड्ढेसु, विज्जुप्पह निसढनीलवंतेसु । तह मालवंतसुरगिरि, नव नव कूडाइं पत्तेयं ॥१४॥**

चउतिसेत्ति–चतुस्त्रिंशति वैताढ्येषु विजयभरतैरवतविच्छेदकेषु दीर्घवैताढ्येषु, तथा विद्युत्प्रभश्च निषधश्च नीलवांश्च ते तथोक्ताः तेषु, तथेति सादृश्ये, माल्यवांश्च सुरगिरिश्च माल्यवत्सुरगिरी, तयोस्तथोक्तयोः प्राकृतशैल्या विभक्तिलोपः, एतेषु प्रत्येकमेकोनचत्वारिंशति पर्वतेषु नव नव कूटानि भवंति ॥ १४ ॥ तथा—

**हिमसिहरिसु इक्कारस, इय इगसट्ठी गिरिसु कूडाणं । एगत्ते सव्वधणं, सय चउरो सत्तसट्ठीय ॥१५॥**

हिमेत्ति–हिमेति पदैकदेशेऽपि पदसमुदायोपचाराद् हिमवान्, यथा भीमो भीमसेनः दृष्टश्च, हिमवांश्च शिखरी च हिमवच्छिखरिणौ तयोस्तथोक्तयोः, इह प्राकृतत्वात्सूत्रे बहुवचनं । यत उक्तं—" दुव्वयणे बहुवयणमिति " । प्रत्येकमेकादशका दश कूटानि भवंति । समस्तकूटगिरीणां कूटानां च सर्वाग्रमाह—" इय इगसट्ठीत्यादि " । इति वक्ष्यमाणप्रकारेण एकेनार्गला षष्टिरेकषष्टिः तस्यामेकषष्टौ गिरिषु आधारभूतेषु पर्वतेषु एकत्वे सर्वांके सर्वधनं निखिलसमुदायः सप्तषष्ट्यर्गलानि चत्वारि शतानि ४६७ कूटानां भवंतीति शेषः ॥ १५ ॥

अथ सर्वकूटसंख्यानयनाय करणमाह—

चउसत्तअट्ठनवगेगारसकूडेहिं गुणह जहसंखं ।
सोलसदुदुगुणयालं, दुवे य सगसट्ठि सय चउरो ॥१६॥

चउसत्तेति—चतुःसप्ताष्टनवैकैकादशभिः कूटैः यथासंख्यं यथाक्रमं यथोपन्यासमिति यावत् गुणयत गुणकारमवृत्तान् कुरुत, हे गणितज्ञा इति गम्यते । कानित्याह—' सोलसेत्यादि ' षोडश द्वौ द्वौ एकोनचत्वारिंशतं द्वौ चेति, तद्यथा षोडशानां चतुर्भिर्गुणने चतुःषष्टिः, द्वयोस्तु सप्तभिर्गुणने चतुर्दश, तथा द्वयोरेवाष्टभिर्हनने षोडश, एकोनचत्वारिंशतो नवभिरभ्यासे सैकपंचाशानि त्रीणि शतानि, द्वयोः पुनरेकादशानां गुणकारे जाता द्वाविंशतिरिति । एतावता सर्वांकेन का संख्या भवतीत्याह—' सगसट्ठे ' त्यादि, सप्तषष्ठ्यधिकानि चत्वारि शतानि कूटानां भवंतीति गाथार्थः ॥ १६ ॥

इदानीं गिरिशिरःस्थितानि कूटान्यभिधाय भूमिस्थकूटसंख्यानमाह—

चउतीसुं विजयेसुं, उसुकूडा अट्ठ मेरु जंबुंमि । अट्ठय देवकुराए, हरिकूडहरिस्सहे सट्ठी ॥१७॥

चउतीसुं इति—ऋषभकूटानि प्रागुक्तस्थानानि विजयेषु जिनाद्युत्तमपुरुषोत्पत्तिक्षेत्रेषु चतुस्त्रिंशत् भवंति । तथा मेरौ मंदरगिरौ जंब्वामनादृतदेवनिवासवृक्षे प्रत्येकमष्टावष्टौ, चः समुच्चये, देवकुराविति, तदाधेये शाल्मलिवृक्षेऽष्टावष्टसंख्यानि तथाहि—मेरुकूटानि शीताशीतोदोभयकूलवर्त्तीनि दिग्गजनामानि, उत्तरकुरौ जंबूवृक्षसत्कवनमध्ये प्राक् प्रपंचितान्यष्टौ कूटानि, एवमेव देवकुरौ शाल्मलिवनमध्येऽष्टावेव, हरिकूटहरिस्सहकूटे विद्युत्प्रभमाल्यवतोर्वक्षस्कारयोरुपरिस्थिते, सामस्त्येन किं जातमित्याह—' स-

द्वीति ' षष्टिस्तिस्रो विंशतय इति गाथार्थः ॥ इह यत् हरिकूटहरिस्सहौ भूमिस्थकूटानां मध्ये निबद्धौ तन्न घटते, तयोर्वक्षस्कारयोरुपरिभावात्, तदुक्तं—" विज्जुप्पहेहरिकूडो हरिस्सहो मालवंतवक्खारे " इति । तथैतादृशाभिधानं भूमिकूटमपरं जंबूद्वीपमध्ये न दृश्यते, बृहत्क्षेत्रसमासाद्यनुसारतः, ये तु वक्षस्कारशिरःस्थे हरिकूटहरिस्सहकूटे, ते गिरिकूटप्रस्तावे सप्तषष्ट्यधिकचतुःशतकूटमध्ये पठिते, तत " इय अडवन्नं धरणिकूडा " इति पाठो युक्तः, एतदर्थमाह, इत्युक्तप्रकारेण धरणिस्थानि कूटानि धरणिकूटानि अष्टपंचाशद् भवंति । तथा च यद्यपि भूमिस्थिताः शिलोच्चयाः सर्वेऽपि पर्वता भण्यंते, तथाप्येषां क्षेत्रसमासादिषु कूटानीति संज्ञा । इयं गाथा पुराणपुस्तकेषु न दृश्यते परमुपयोगिनीति कृत्वा व्याकृतेति । गतं पंचमं पर्वतद्वारं ॥ १७ ॥

अधुना षष्ठं तीर्थसंख्याद्वारमाह—

मागहवरदामपभासतित्थ विजएसु एरवयभरहे ।
चउतीसा तीहिं गुणिया, दुरुत्तरसयं तु तित्थाणं ॥ १८ ॥

मागहत्ति—मागधश्च वरदाम च प्रभासश्च मागधवरदामप्रभासाः त एव तीर्थानि मागधवरदामप्रभासतीर्थानि, प्राकृतशैल्या सूत्रे विभक्तिलोपः, तथा तीर्थशब्दः प्रत्येकं संबंधनीयः, तेन मागधतीर्थं १ वरदामतीर्थं २ प्रभासतीर्थं ३ चेति, क्व चैतानि संति ? इत्याह—विजया महाविदेहमध्यवर्त्तिनः खंडविशेषाः, ते च सर्वसंख्यया द्वात्रिंशत् तेषु, तथा ऐरवतं च भरतं चेति समाहारद्वंद्वः, तस्मिन्नैरवतभरते, श्रोतारमनुलक्ष्य चरमे प्रथमे च क्षेत्रे संतीति शेषः । उत्तरार्द्धेन सर्वसंख्यानयनाय करणमाह—' चउतीसे '

त्यादि; तीर्थानां सर्वाग्रे द्वाभ्यामुत्तरमधिकं शतं दश दशकलक्षणं द्व्युत्तरशतं, तुः पादपूरणे भवतीत्यध्याह्रियते। कथमित्याह–चतुर्भिरधिका त्रिंशत्, त्रिभिर्गुणिता गुणकारविषयीकृता सतीति गाथार्थः ॥ १८ ॥

अथ सप्तमं श्रेणिद्वारमाचिख्यासुराह—

विज्जाहर अभिओगिय, सेढीउ दुन्नि दुन्नि वेयड्ढे ।
इय चउगुण चउतीसा, छत्तीससयं तु सेढीणं ॥ १९ ॥

विज्जाहरेत्ति–विद्याधराः खेचराः अभियोगः पारवश्यं तत्र नियुक्ता आभियौगिकाः ते चेह संप्रदायात् सौधर्मेशानयोर्देवलोकयोः प्रेष्यप्रायाः सुरा ज्ञेयाः तेषां श्रेणयः प्रागुक्तस्वरूपाः वैताढ्ये विजयार्धपर्वते एकैकस्मिन्निति गम्यते, द्वे द्वे प्रत्येकं ज्ञातव्ये इति शेषः। तथाहि–एकैकस्मिन् वैताढ्ये एकस्यामेकस्यां दिशि एकैका विद्याधरश्रेणिः, एकैका चाभियौगिकदेवनिवासश्रेणिः समुदिता, पार्श्वद्वयेऽपि चतस्रश्चतस्रो भवंति। अपरार्द्धेन संख्यानयनाय करणमाह–'इयेत्यादि' इत्यनेन प्रकारेण चतुस्त्रिंशत् चतुर्गुणा चतुर्भिर्गुणिता किं भवति? इत्याह–श्रेणीनां षट्त्रिंशदधिकं शतं भवति। गतं श्रेणिद्वारं ॥ १९ ॥

अधुना गाथार्द्धेनाष्टमं विजयद्वारमाह—

चक्की जेयव्वाइं, विजयाइं इत्थ हुंति चउतीसं ।

चक्कीत्ति–इत्येत्यत्र जंबूद्वीपेऽस्मिन् प्रकरणे वा विजयाश्चतुस्त्रिंशद् भवंति । किंविशिष्टाः ? इत्याह–चक्कीत्यादि, चक्रं सहस्रयक्षाधिष्ठितः प्रहरणविशेषः, तदस्त्यस्येति चक्री सार्वभौमः, यः षट्खंडां भुवं भुनक्तीत्यर्थः तेन जेतव्या वशमानेतव्या इति । तथा चतुस्त्रिंशदिति वदता सूत्रकारेण भरतैरवते क्षेत्रे अपि विजयत्वेनारोपिते, उत्तमपुरुषनिषेवितत्वात्, नचैतदनागमिकं, यदुक्तं समवायांगे–" जंबुद्दीवेणं दीवे चउतीसं चक्कवट्टिविजया पन्नत्ता, तं जहा बत्तीसं महाविदेहे भरहेरवईत्ति " । इह सूत्रे सविशेषणस्य विजयशब्दस्य नपुंसकत्वं प्राकृतत्वान्न दोषायेति ॥

अथ नवमं ह्रदद्वारं गाथापाश्चात्यार्धेनाह–

महदह छ प्पउमाई, कुरुसु दसगंति सोलसगं ॥ २० ॥

महदहेत्ति–पद्मो हिमवद्गिरिशिरःस्थ आदिर्येषां ते पद्मादयः, षडिति षट्संख्याकाः, आदिग्रहणान्महापद्मतिगिंछिकेसरिमहापुंडरीकपुंडरीकाणां ग्रहः । क एते ? इत्याह–' महदहत्ति ' महांत इतरह्रदापेक्षया गुरुकाः ह्रदाः नदाः महाह्रदाः, तथा कुरवो देवकुरव उत्तरकुरवश्च तेषु दशसंख्यामानमेषां, दशकं ह्रदानामिति गम्यते, पंच ह्रदा देवकुरुषु, पंचोत्तरकुरुषु चेत्यर्थः । अथ सर्वाग्रमाह, समासः प्राग्वत्, षोडशकमिति मिलिताः सर्वेऽपि षोडश इह भवंतीति ॥ २० ॥

इदानीं दशमं नदीद्वारमाह—

गंगा सिंधू रत्ता रत्तवई चउ नइउ पत्तेयं । चउदसहिं सहस्सेहिं, समगं वच्चंति जलहिंमि ॥ २१ ॥

गंगेत्ति—गंगासिंधुरक्तारक्तवत्यः प्रागुक्तस्वरूपाः चतुःसंख्याका नद्यः सरितः प्रत्येकं पृथक् पृथक् चतुर्दशभिश्चतुर्दशभिर्नदीसहस्रैः सममेव समकं सार्द्धं जलधिं व्रजंति गच्छंति प्रविशंतीति यावत् ॥ २१ ॥

एवं अब्भंतरगा, चउरो पुण अठवीससहस्सेहिं ।
पुणरवि छप्पन्नेहिं, सहस्सेहिं जंति चउसलिला ॥ २२ ॥

एवमिति—एवमित्यनेन प्रकारेण यथा एता गंगाद्या एकप्रमाणाश्चतस्रो जलधिं प्रविशंति, तथा अभ्यंतरं गच्छंतीत्यभ्यंतरगाः, मध्यवर्त्तिन्यश्चतस्रो नद्यो रोहितांशारोहितारूप्यकूलासुवर्णकूलालक्षणाः, पुनर्विशेषणे, किं विशिनष्टि? तदाह—प्रत्येकमष्टाविंशत्या नदीसहस्रैः समन्विता जलधिं प्रविशंतीति प्राच्यगाथासंबंधोऽध्याहार्यः । तत्र रोहितांशारोहिते हैमवतक्षेत्रं रूप्यकूलासुवर्णकूले हैरण्यवतं च मध्येकृत्य प्रवहंति । तन्मध्यवर्त्तिनीनां पुनराधिक्यं दर्शयति-'पुणरवीत्यादि' पुनरपि प्रागुक्तनदीभ्यो मध्यगामिन्यश्चतस्रो हरिकांताहरित्सलिलानारीकांतानरकांताभिधानाः सरितः पृथक् पृथक् षट्पंचाशता नदीसहस्रैः सह यांति जलनिधिमिति शेषः । तथा हरिकांताहरित्सलिले हरिवर्षं, नारीकांतानरकांते पुना रम्यकं द्विधा विदधते । एवं महाविदेहव्यतिरिक्तेषु षट्सु क्षेत्रेषु त्रीणि लक्षाणि द्विनवतिसहस्राणि ३९२००० नद्यो भवंति ॥ २२ ॥

इदानीं महाविदेहनदीनां संख्यामाह—

कुरुमज्झे चउरासी, सहस्साइं तहय विजयसोलससु । बत्तीसाणनईणं, चउदस सहस्साइं पत्तेअं ॥२३॥

कुरुत्ति—कुरव इत्युत्तरकुरवः, पदैकदेशेऽपि पदसमुदायोपचाराद्यथा जामा सत्यज्ञामेति । तेषां मध्ये विचाले चतुरशी-तिसहस्त्राणि नद्यः । तथेतिशब्दो विशेषद्योतकः, चः पादपूरणे । विजयेषु प्राग्विदेहमध्यवर्त्तिषु षोमशसु, द्विरष्टसंख्यावच्छिन्नेषु द्वात्रिंशतो गंगासिंधुप्रायाणां प्रत्येकं चतुर्दशसहस्त्राणि ज्ञवंति । तथाहि–एकस्मात् कच्छदेशविजयात् प्रत्येकं चतुर्दशज्ञिश्चतुर्दश-ज्ञिः सहस्त्रैः सह द्वे नद्यौ रक्तारक्तवतीनाम्न्यौ शीतायां प्रविशतः । प्राक् सामस्त्येन तत्राष्टाविंशतिसहस्त्राणि नद्यो ज्ञवंति । एष एव क्रमः सर्वेषु विजयेषु । यथा पूर्वविदेहेषु विजयाः षोमश (१६), प्रतिविजयं चाष्टाविंशतिसहस्त्राणि नद्यः । अपरविदेहमाश्रि-त्योक्तं च–"विजयाविय इक्केका, अट्ठावीसाइ नइसहस्सेहिं । आउरमाणसलिला, अवरेणुदहिं समणुपत्ता " ॥ १ ॥ इति । ततोऽ-ष्टाविंशतेः सहस्त्राणां षोमशज्ञिर्गुणकारे जाताश्चतस्त्रो लक्षा अष्टाचत्वारिंशत्सहस्त्राधिकाः ४४८००० नद्यः । पूर्वोक्ताश्चतुरशीति-सहस्त्रा उत्तरकुरुमध्यगा नद्यः एतासां मध्ये प्रक्षिप्यंते, जातानि द्वात्रिंशत्सहस्त्राधिकानि पंचलक्षाणि ५३२००० नदीनां । तथाऽ-नेनैव पर्यायेण देवकुरुष्वपरमहाविदेहानां संबंधिषु विजयेष्वपि एतावत्य एव ५३२००० सरितः । ततोऽस्यांकराशिद्वयस्य मीलने जातानि दशलक्षाणि चतुःषष्टिसहस्त्राधिकानि १०६४०००। तथैतदंकराशिमध्ये पूर्वोक्तानि त्रीणि लक्षाणि द्विनवतिसहस्त्राधिका-नि क्षिप्यन्ते, ततो ज्ञवंति समस्तजंबूद्वीपे षट्पंचाशत्सहस्त्राधिकानि चतुर्दशलक्षाणि १४५६००० सर्वाग्रेण नद्य इति ॥ २३ ॥

एवं व्याख्याने कृते विजयच्छेदिनीनां ग्राहवत्यादीनां षण्णां नदीनां प्ररूपणा उपेक्षिता ज्ञवत्यतस्तद्वर्णनाय वाचनांतरेण द्वितीयं प्रकारमाह—

चउदस सहस्सगुणिया, अमतीसनईउ विजयमज्झिल्ला ।

सीओयाए निवमंति तहय सीयाइ एमेव ॥ २४ ॥

चउदसेत्ति—अन्ये आचार्या एवमाचक्षते—अष्टात्रिंशद्विजयमध्यवर्त्तिन्यः शीतोदायां निपतंति प्रविशंति, किंविशिष्टास्ताः ? इत्याह—चतुर्दशभिर्नदीसहस्रैर्गुणिता अभ्यस्ताः, पुनः कीदृश्यस्ताः ? सधया—द्वात्रिंशद्रक्ताख्या नद्यः, तथा षट् ग्राहवत्याद्याः, एवं सामस्त्येन अष्टात्रिंशत् षोडशविजयेषु संति । ततश्चतुर्दशसहस्रैर्गुणिताः अष्टात्रिंशत् जातानि पंचलक्षाणि द्वात्रिंशत्सहस्राधिकानि ५३२००० । तथेति सादृश्ये, यथा शीतोदायामेवमेवेति । अनेनैव प्रकारेण पंचलक्षाणि द्वात्रिंशत्सहस्राधिकानि ५३२००० शीतायामपि भवंतीति । ततो राशिद्वयस्याप्येकीकरणे चतुःषष्टिसहस्राधिकानि दशलक्षाणि १०६४००० सरितो भवंति ॥ इत्थं च व्याख्यायमाने कुलमध्यगाश्चतुरशीतिसहस्राणि सरितो न गृहीताः, तासां स्थाने ग्राहवत्यादयः षडंतर्नद्यः प्रत्येकं चतुर्दशनदीसहस्रसमन्विताश्चतुर्दशषट्कानि चतुरशीतिरिति गणनाक्रमेण चतुरशीतिनदीसहस्रसंख्यां पूरयित्वा यथोक्ता संख्या समाहिता । एतदयमपि प्रकारो न संभवति, यतोऽन्तर्नद्यो गंगादिभ्यः सकाशाद् द्विगुणविस्तारा प्रतीयंते, “ पणवीससयं च सविसाओ ” इति वचनात्, ततो द्विगुणोऽष्टाविंशतिनदीसहस्रलक्षणः प्रत्येकमासां परिवारो न्याय्यः । आह चोमास्वाति-वाचकः—नद्यो विजयच्छेदिन्यो रोहितावत्कुंडद्वीपा स्वनामदेवीवासाः अष्टाविंशतिनदीसहस्रानुगाः प्रत्येकं सर्वत्रसमाः पंचविंशत्यधिकं योजनशतम् विस्तृताः अर्धतृतीययोजनावगाहाः ग्राहह्रदपंकवत्य इत्यादि ” । अतः षण्णामप्येतासामष्टषष्टिसहस्राधिकं लक्षमेकं

सरितः परिवारः, तथा पंचलक्षाणि सद्वात्रिंशत्सहस्राणि पुनः सकुरूणां विजयानामंतर्नदीरहितानां भवंति एवं राशिद्वयस्य मीलने पूर्णानि सप्तलक्षाणि सरितः एतावत्य एवापरविदेहे देवकुरुसमन्विते, ततः समस्तमहाविदेहे चतुर्दशलक्षाणि १४००००० सलिलाः। पुनस्त्रीणि लक्षाणि द्विनवतिसहस्राधिकानि भरतादीनां शेषाणां, एवं सर्वाके सप्तदशलक्षाणि द्विनवतिसहस्राधिकानि १७९२००० नद्यो भवंतीति। उक्तं च सूत्रे—"चउदसलक्खा छपन्नसहसजंबुदीवंमि। हुंति उ सत्तरसलक्खा बाणवइसहस्स सलिलाओ ॥१॥" इति। तथा सिद्धांतानुसारेण पुनरेवं ज्ञायते, यद् ग्राहवत्यादीनां द्वादशनदीनां परिवारो न संभवति। यत एतद्व्यतिरिक्ता जंबूद्वीपे या अन्याः सरितः संति, तासां प्रवाहान्मुखे सर्वासां दशगुणो विस्तारः सुप्रतीत एव। उक्तं च वाचकमुख्येन—"सर्वा नद्यः प्रवाहदशगुणा मुखे विस्तारपंचाशद्भागावगाहा इति।" एतासां तु तथा न किंतु प्रवाहमध्ये मुखे चैकरूपः पंचविंशत्यधिकयोजनशतलक्षणः प्रत्येकं विस्तारः, नान्यः कश्चिद्विशेषो न च परिवारोऽप्यासां दृश्यते क्षेत्रसमासबृहद्वृत्त्यनुसारेण, अतः प्रतीयते, यद्येतास्वन्या अनेकानि सहस्राणि नद्यः प्रविशेयुस्तदा कथं क्रमेण परतः परतो गच्छंतीनां विस्तारविशेषो गंगादीनामिव न संपद्येतेति? अन्यच्च पूर्वविदेहे भद्रशालवनसमीपवर्त्तिनोः कच्छमंगलावतीविजययोस्तथा मुखवनोपकंठस्थयोः पुष्कलावतीवच्छनाम्नोश्च विजययोरंतर्नदीनामभाव एवास्ति, अत एतेषु चतुर्ष्वपि प्रत्येकं सामस्त्येनाष्टाविंशतिरष्टाविंशतिसहस्राणि नद्यः संति। गंगासिंधुसंबंधिन्यो नापराः यावती च कच्छविजये भूमिरंतर्नदीमतां सुकच्छादीनां द्वादशानामप्यन्येषां च तावत्येव नाधिका, अतः कथं तेषु बहुतरा नद्यो ग्राहवत्याद्यंतर्नदीसंयोगेऽपि विशेषभूमेरभावात्संभवंति?

अत्राह—नैतत्संवादकोटीमाटीकते, यतो जंबुद्वीपप्रज्ञप्तावर्पयंतनदीनां प्रत्येकमष्टाविंशतिनदीसहस्रलक्षणः परिवारो जणितस्तथा च तद्वाक्यं—" गाहावई महानई पवूढासमाणीसुकच्छ महाकच्छविजये छुहा विजयमाणी २ अट्ठावीसाए सलिला सहस्सेहिं समग्गा दाहिणेणं सीयमहानई समुप्पेई"। अपरे अनूचानाः पुनरित्थं प्रवदंति—यथा अष्टाशीतिग्रहाश्चंद्रस्यैव परिवारतया प्रसिद्धा अपि सूर्यस्य एत एव परिवारः न पुनरन्यः पृथक् प्रतीयते। उक्तं च समवायांगवृत्तौ—"अष्टाशीतिमहाग्रहा एते यद्यपि चंद्रस्यैव परिवारोऽन्यत्र श्रूयते तथापि सूर्यस्यापींद्रत्वादेत एव परिवारतयाऽवसेया इति"। तथा गंगासिंधुसंबंधिन्य एवाष्टाविंशतिरष्टाविंशतिनंदीसहस्राणि अंतर्नदीनामपि परिवार इति। एवमपरविदेहेऽपि ज्ञातव्यमिति ॥ २४ ॥

अत्र सूत्रकारोऽमुमेवार्थं स्पष्टयन् सकलजंबूद्वीपनदीनां संख्यामाह—

**सीयासीओया विय, बत्तीस सहस्स पंचलक्खेहिं । सव्वे चउदसलक्खा, छप्पन्नसहस्स मेलविया ॥२५॥**

सीयाइति–शीता नदी पंचभिर्लक्षैर्द्वात्रिंशता सहस्रैर्नदीभिः समं जलधिं व्रजंतीति पूर्वतरगाथायाः संबंधो गृह्यते। तथा शीतोदापि पृथगेतावतैव परिवारेणावगंतव्या, ततः सर्वसंख्यया किं जातमित्याह–'सव्वेत्यादि' सर्वे नदीवाचिनोऽका इति गम्यते, यदि वा प्राकृतत्वाल्लिंगव्यत्यये सर्वा नद्यः, 'मेलवियत्ति' मेलिता इति णिगंतोऽपि मूलार्थद्योतकः, यथा रामो राज्यमकारयदकरोदित्यर्थः, ततो मिलिताः समुदिताश्चतुर्दशलक्षाणि षट्पंचाशत् सहस्राणि अष्टसप्ततेर्नदीनां परिवारः, ताश्चेमाः चतुर्दश गंगाद्या ह्रदसंभवाः तथा कुंडप्रभवा गंगासिंधुप्रमाणाः प्रतिविजयं द्वे द्वे इति कृत्वा द्वात्रिंशति विजयेषु चतुःषष्टिः, ग्राहवत्याद्या द्वादश तु परिवार-

हीना अंतर्नद्य एवमेता नवतिर्महानद्यो भवंति जंबूद्वीपे । परं पूर्वोक्तात् षट्पंचाशत्सहस्राधिकचतुर्दशलक्षलक्षणात् परिवारादेताः समधिका विज्ञेया न पुनस्तन्मध्ये गणनीयाः, यतो "गंगासिंधुरत्ता रत्तवई" इति गाथया चतुर्दशसहस्रसंख्यः परिवारो मूलनदीव्यतिरिक्त उक्त इत्यादि । आम्नायांतरमतानुसारिणोऽप्येवमेवाहुः, तथा च तद्ग्रंथः—"जंबूद्दीवनराहिव, संखा सव्वनइ चउदस य लक्खा । छप्पन्नं च सहस्सा, नवइ नईओ कहंति जिणा" ॥ १ ॥ ॥ २५ ॥

संप्रति महानदीनां प्रवहमुखयोर्विस्तारमाह—

**उज्जोयणे सकोसे, गंगासिंधूण वित्थरो मूले । दसगुणिओ पज्जंते, इय दुदु गुणणेण सेसाणं ॥ २६ ॥**

उज्जोयणेत्ति—गंगासिंध्वोः सादृश्याद्रक्तारक्तवत्योरपि मूले प्रवहे ह्रदान्निःसारे इति यावत्, सक्रोशानि सगव्यूतानि षट् योजनानि विस्तारः प्रपंचः, पर्यंते समुद्रादिप्रवेशे दशगुणितो दशगुणः सार्धद्वाषष्टियोजनरूपो विस्तारो भवति । तथाऽभ्यंतराणां रोहितांशादीनां स्वरूपमाह—'इय' इत्यादि । इत्यनया दिशा शेषाणां द्वाभ्यां द्वाभ्यां गुणनं तेन द्विद्विगुणनेन विस्तारः शेषाणामवशिष्टानामनुक्तानामिति यावत् लभ्यते इति शेषः । तद्यथा रोहितांशारोहितारूप्यकूलासुवर्णकूलानां प्रवहे सार्धद्वादश पर्यंते पंचविंशं शतं योजनानि विस्तारः । तथा तन्मध्यानां हरिकांताहरित्सलिलानारीकांतानरकांतानां ह्रदतोरणान्निर्गमे पंचविंशतिः, जलधिप्रवेशे तु सार्धशतद्वयं योजनानि । पुनः शीताशीतोदयोस्तोरणान्निःसारे पंचाशत्पर्यंते पंचशतानि योजनानां प्रपंच इति गाथार्थः ॥ २६ ॥

इदानीं सूत्रकारः स्वयमेव मुग्धाववोधार्थं वर्षधराणामुच्चत्ववर्णावाह—

जोयणसयमुव्विद्धा, कणयमया सिहरि चुल्लहिमवंता ।
रूप्पि महाहिमवंता, दुसउच्चा रुप्पकणयमया ॥ २७ ॥

जोयणेत्ति–शिखरी पर्यंतवर्त्ती वर्षधरः, चुल्ल इति क्षुल्लो महाहैमवतापेक्षया लघुः हिमवान् क्षुल्लहिमवान् एतौ योजनशतमुद्विद्धावुच्छ्रितौ कीदृशावित्याह–कनकं स्वर्णं तन्मयौ तद्वर्णावित्यर्थः । तथा 'रुप्पीत्यादि' रुक्मिमहाहैमवंतौ द्वे शते योजनानामिति गम्यते, उच्चावुच्छ्रितौ, द्विशतोच्चौ, तथा रूप्यकनकमयौ क्रमेण । तथाहि–रुक्मी रूप्यमयः, महाहिमवांस्तु हिरण्मय इति । इह यद्यप्यवगाहो नोक्तः सूत्रकारेण, तथाप्युच्छ्रयस्य चतुर्थांशमानोऽवगम्यः । उक्तं च—"सव्वेवि पव्वयवरा, समयखित्तंमि मंदरविहूणा । धरणितले अवगाढा, उस्सेह चउत्थयं जायं" ॥ १॥ इति ॥२७॥

चत्तारि जोयणसए, उव्विद्धो निसढनीलवंतो य । निसढो तवणिज्जमओ वेरुलिओ नीलवंतगिरी ॥२८॥

चत्तारित्ति–निषधः चत्वारि योजनशतानि उद्विद्ध उच्चः, न केवलमयं, नीलवांश्च तावदेवोच्चः । चः समुच्चये । तथा निषधस्तपनीयमयो जात्यस्वर्णनिर्माणो रक्तवर्ण इत्यर्थः । माल्य(नील)वान् गिरिस्तु वैडूर्यमयो नीलवर्ण इति ॥ २८ ॥

संप्रति स्वाभिधानप्रकाशनपुरस्सरं सूत्रकारोऽर्थकरणोपसंहारमाह—

खंडाई गाहाए, दसहिं दारेहिं जंबूदीवस्स । संघयणी सम्मत्ता, रइया हरिभद्दसूरीहिं ॥२९॥

खंभाइत्ति–जंबूद्वीपस्याद्यद्वीपक्षेत्ररूपस्य संग्रहणिः समाप्ता इष्टार्थकथनेन पूर्णा । कैः? इत्याह–दशभिः दशसंख्यावच्छिन्नैः द्वारैरुक्तस्वरूपैः, किंविशिष्टैः? 'खंभाईत्ति' खंभादीनामुद्देशका गाथा खंभादिगाथा, तया तथोक्तया, "दीर्घह्रस्वौ मिथो वृत्तौ" इति दीर्घत्वं 'ई,' 'खंभा जोयणवासा' इत्यनया सूत्रादिकथितया गाथया उपलक्षितैरिति । कैः कृतेयं? इत्याह–श्री हरिभद्रसूरिभिः रचिता सूत्रतया निबद्धेति भद्रम् ॥ ३० ॥

## अथ वृत्तिकारस्य प्रशस्तिः ।

नित्यं श्रीहरिभद्रसूरिगुरवो जीयासुरत्यद्भुत–ज्ञानश्रीसमलंकृताः सुविशदाचारप्रभाभासुराः ।
येषां वाक्प्रपया प्रसन्नतरया शास्त्रांबुसंपूर्णया, भव्यस्येह न कस्य कस्य विदधे संतापलोपोऽवनौ ॥ १ ॥
विते श्रीकृष्णगच्छे श्रमणपरिवृढः श्रीमज्ञानंदसूरिः, क्षेत्रादेः संग्रहिण्या अकृत समयगैः संवदंतीं सदर्थैः ।
एतां वृत्तिं खनंदज्वलनशशिमिते विक्रमाब्दे चतुर्थ्यां, भाद्रस्य श्यामलायामिह यदनुचितं तद्बुधाः शोधयंतु ॥ २ ॥

इति क्षेत्रसंग्रहणिवृत्तिः समाप्ता ।